

## प्रो० अभिराज राजेन्द्र मिश्र

उत्तर-प्रदेश के पूर्वांचल जनपद जौनपुर में द्रोणीपु[illegible] गाँव मे[illegible] पं. दुर्गाप्रसाद मिश्र एवं महीयसी अभिराजी देवी के म[illegible] पुत्र के रूप में २ जनवरी, १९४३ ई. को उत्पन्न प्रो. 'अभिराज' राजेन्द्र मिश्र सम्प्रति सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी के लोकप्रिय कुलपति हैं।

प्रारम्भिक शिक्षा गाँव के विद्यालय एवं पार्श्वस्थ कालेज में पूर्ण करने के बाद श्री मिश्र जी ने इलाहाबाद विश्वविद्यालय से बी.ए.एम.ए. तथा डी.फिल् उपाधियाँ प्राप्त की। १९६४ ई. की एम.ए. (संस्कृत) परीक्षा में वे सर्वोच्च अंक तथा प्रथम स्थान पाने के साथ ही साथ समूची आर्ट्स फैकल्टी के टापर भी रहे।

शोधकार्य सम्पन्न करने के साथ ही साथ आपने संस्कृत- विभाग, इलाहाबाद यूनिवर्सिटी में १० दिसम्बर,१९६६ ई. से अध्यापन प्रारम्भ किया तथा जनवरी, १९९१ ई. तक लेक्चरर एवं रीडर के रूप में वहीं कार्यरत रहे। इसी बीच भारत सरकार ने उन्हें बालीद्वीप (इण्डोनेशिया) के उदयन विश्वविद्यालय में विजिटिंग प्रोफेसर भी नियुक्त कर दिया, जहाँ उन्होंने मार्च, १९८७ से अप्रैल, १९८९ तक रहकर अन्तर्राष्ट्रीय स्तर का उत्कृष्ट साहित्यिक कार्य किया। भारत लौटते ही प्रो. मिश्र जनवरी, १९९१ में हिमाचल प्रदेश युनिवर्सिटी, शिमला में आचार्य एवं अध्यक्ष नियुक्त हो गये। अभी सेवावधि बीती भी नहीं थी कि महामहिम कुलाधिपति, उ.प्र. ने उन्हें सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी का कुलपति नियुक्त कर दिया २४ अप्रैल, २००२ ई. को।

हिन्दी, संस्कृत, भोजपुरी में काव्य, नाट्य, कथा एवं समीक्षा के प्रातिभ सर्जक तथा अंग्रेजी एवं प्राचीन जावी भाषा में भी आधिकारिक प्रवेश रखने वाले सहृदय कवि एवं प्रखर चिन्तक प्रो. राजेन्द्र मिश्र अन्तर्राष्ट्रीय ख्याति के विद्वान् हैं। उनका ज्ञान जितना गम्भीर एवं बहुआयामी है, अभिव्यक्ति उतनी ही मौलिक एवं बोधगम्य। उनकी वाणी का सम्मोहन लोगों को बरबस महीयसी महादेवी वर्मा एवं आचार्य विद्या निवास मिश्र का स्मरण कराता है।

शताधिक यशस्वी कृतियों एवं प्रायः तीन सौ शोध-निबन्धों के सर्जक प्रो. मिश्र को साहित्य अकादमी (१९८८), के. के. बिरला फाउण्डेशन का वाचस्पति सम्मान (१९९३), कालिदास सम्मान (१९८८, १९९६), कल्पवल्ली सम्मान (१९९८) तथा महामहिम राष्ट्रपति-सम्मान १९९९ के अतिरिक्त दिल्ली, मध्यप्रदेश, राजस्थान, आन्ध्रप्रदेश तथा उत्तर-प्रदेश की अकादमियों के भी पच्चीस से अधिक साहित्यिक पुरस्कार अब तक प्राप्त हो चुके हैं।

# श्रुतिम्भरा

( प्रत्यग्रनवगीतसङ्कलनम् )




वितनोति

मिश्रोऽभिराजराजेन्द्रः
प्रयागविश्वविद्यालयीयसंस्कृतविभागे
प्रवाचकः
बालीद्वीपस्थोदयनविश्वविद्यालये
पूर्वमभ्यागताचार्यः



वैजयन्त प्रकाशन
इलाहाबाद

# SHRUTIMBHARĀ

## ( A Collection of the Latest Sanskrit Lyrics )



Presents

**ABHIRĀJA DR RĀJENDRA MISHRA**
Reader in Sanskrit
University of Allahabad.
Formerly Visiting Professor
Udayana University, Denpasar, Bali
INDONESIA



Vaijayanta Prakashana
Allahabad

**SHRUTIMBHARĀ**

Letest Sanskrit Lyrics.


8 Baghambari Road,
Allahabad (U. P.) INDIA

First Edition :
December 1989 A. D
Price of the Book :
Rs Twenty only.

Printed by
Shubhachintak Press
Baski Khurd, Daraganj
Allahabad,




# मदीया काव्ययात्रा

कुतः ारभे ? यात्रापृष्ठभूमितोऽथवा मध्येपथमाश्रिताद् विश्रमस्थानाद्वा ? मत्काव्ययात्राऽनुसन्धित्सुः कोऽप्यन्यः साहितीपक्षधरो निश्चप्रचमेव नीरक्षीरविवेकं प्रदर्शयन् विद्यावतां प्रश्रयभाजनं भवितुं शक्नुयात् । परन्तु मयैव प्रस्तुतेयं काव्ययात्राऽत्मदोषदर्शनाऽक्षमतया मन्ये वर्णनमात्रैकरुचिं प्रतनोति । आत्मनि कस्य सम्भवति द्राक् संस्खलनग्राहिणी मीमांसा ? तथापि परकायप्रवेशमिव समाचरन् आत्मसंविदमन्यथाकुर्वन् प्रस्तौमि किञ्चिद्वाचिकं प्राकरणिकविषयमवलम्ब्य ।

अबोधविकले शैशव एव क्रीडनकाय, मिष्टान्नाय, यस्मै कस्मैचिदप्यन्यस्मायर्थाय वा होरापर्यन्तं मया सानवरतरोदनमनुसृता भृशमुद्वेजिता जननी प्रायेण कान्दिशीकतामनुभवन्ती नयनसलिलमुद्गिरन्ती च सक्रोधं निर्भर्त्सयतेस्म—'अपेहि रे हृतभाग्य ! जनिं गृह्णन्नेव जनकं भक्षितवानसि । मामपि भक्षय । तुष्टिस्ते भविष्यति !'

विषोद्गारमिमं जनन्याः कतिधा नाश्रौषम् ? तथापि विवेको नोद्बुद्धः । पञ्चविंशतिवर्षदेशीया दुस्सहवैधव्यशोकसागरं गह्यमाना जन्मदात्री मे कियती निरुपाया विवशा दीना चासीदिति गवेषणमेव मत्कृते दुष्करमासीत् । ध्रुवं तां वराकीं शार्दूलविक्रीडितैः स्वैः सम्पीड्य पुनरुत्तरेद्युस्तां माणवकाक्रीडैरनुनयन्नासम् । साऽपि मदुच्चावचं कुटिलवृत्तं विस्मृत्य मां लालयन्ती निजोत्सङ्गे करोतिस्म ।

एवमेव व्यतीतप्रायेषु कैतवमेदुरेषु कतिपयहायनेषु सहसैवाहं जाड्योपहतं शैशवमतिक्रम्य प्रबुद्धोऽस्मि जातः । स्फारीभूता झटित्येव पूर्वजन्मार्जिता बुद्धिसंस्काराः । प्रथमवारं जीवनेऽनुभूतम्मया यत् पितृहीनोऽस्मि । वस्तुतः आश्लेषानक्षत्रस्य चतुर्थचरणे धृतजनिरहं पितुः कृतेऽनिष्टकर आसम् । स मूलयोगो मद्दौर्भाग्याच्चरितार्थोऽप्यभूत् । सुगृहीतनामधेयोऽस्मत्पितृचरणः सद्य एव समुपरूढयौवनो विद्यार्जनं कुर्वन्नेवाकस्माद्दिवङ्गतः । अर्धनिर्मित एव कुलायो झञ्झाप्रभञ्जनैर्विनष्टः । अत्यन्तमेव रिक्ततामुपगतं मद्भाग्याकाशम् । तातस्नेहमृगाङ्कोऽन्तरितो नियतिकादम्बिन्या । सम्प्रति काकतालीयन्यायेनाहमेव पितृनिधनहेतुरुद्घुष्टः पित्रानिष्टकरमूलनक्षत्रे धृतजनित्वात् ।

इदानीं जनन्या विषोद्गाराणामाशयः समाम्नातः । आसीच्च मे मनसि— हा ! दैव ! आत्मघ्नोऽस्मि मोचाफलागम इव ! पितृचरणमरणव्यवसायहेतुरहं वेणुपुष्पतामुपगतोऽस्मि । यत्कृपया वर्तमानताऽवाप्ता निजास्तित्वस्य, आः पारिजातप्रतीकाशं

तमेव देवविग्रहं भूतं स्मृतिमात्रविषयञ्च कृतवानस्मि ! धिङ् मां पितृघातिनम् । हन्त आमरणमयं कलङ्ककौलीनभारोऽधुना मयोह्यो भविष्यति ! हा तातपाद ! सार्धद्वि-वर्षदेशीयमेव मां पितृहीनं विधाय क्वोपद्रुतो भवान् ? किं मामकृतिनं स्वमृत्युहेतुं मन्यमानो भवान् प्रतीकारभावनयैव लोकान्तरं गतवान् ? भवन्मृत्युशूलादप्यधिकं भयावहं भवद्विरहसञ्जातं मम निरवधिदैन्यम् । इदानीमरक्षितोऽस्मि जातः ।

समृद्ध आसीत् कुटुम्बः सदस्यैः । पराम्बाचरणेन्दीवरमधुव्रता महाभागवताः पितामहचरणा मय्यतितरां स्निह्यन्तिस्म । नैके पितृव्याः कुलवृद्धा ग्रामवृद्धाश्चाऽप्यासन् । सर्वेषामेव प्रीतिपात्रतामुपगतोऽहम् । यं कमपि दृष्ट्वा तस्य व्यक्तित्वे, व्यवहारे, संस्पर्शे, प्रेम्णि वा दिवङ्गतं स्वपितृचरणमेव गवेषयितुमुपचक्रमे । परन्तु प्रयत्ने कृतेऽपि तेषु तेषु वपुःषु केवलं नामरूपात्मिका व्यक्तिरेव समुपलब्धा न पुनः तातपादानुकृतिः ।

इयमेव तातगवेषणा प्रवर्धमाने वयसि कदाचिदेकान्तपरिदेवनमपि जनयतिस्म । परन्तु नेयं दुःस्थितिश्चिरायुष्का सञ्जाता । प्रविष्टमात्र एव दशमे जीवनवसन्ते भृङ्गकल्पोऽहं किञ्चिदस्फुटमसम्बद्धमधरोत्तरमसमीचीनं वा गुञ्जितुमारेभे । तदेवासीन्मम कवितायाः प्रथमावतरणम् । आदिकवेः शोक इव मम पितृचरणानुसन्धानोपक्रम एव श्लोकत्वमागतः ।

काव्यधारेयं सर्वप्रथमं हिन्दीं लोकभाषामवधीत्याख्यां समाश्रित्य प्रवृत्ता । संस्कृतज्ञानं तदा नातिपरिस्फुटमासीत् । पितामहचरणैरध्यापितं स्मृतिपिटकनिबद्धं वर्णच्युतिसदोषपाठासस्तुतोच्चारणादिकरम्बितं श्लोकजातमेव मम संस्कृतसम्पत्तिरभूत् । अद्यापि तत्सर्वं स्मृतौ सुरक्षितं वर्तते । साबरमन्त्रा इव ते श्लोकाः पाठविकला अपि मम रसनाग्रे वर्तन्ते । कुतस्त्यास्ते श्लोका इत्यधुनाऽपि मया न ज्ञातम् । परन्तु एभिरेव श्लोकसमुच्चयैः संस्कृताध्ययनाभिरुचिर्मे बलवती जातेति मन्ये ।

ऋतुराजशीर्षका हिन्दीकविता समयनाम्नि[1] हिन्दी-साप्ताहिके मुखपृष्ठ एव १७ जुलाई १९५७ मितेऽङ्के प्रकाशिताऽभूत् । तत आरभ्येदानीं यावत् प्रायेण चतुश्शत-मितानि काव्यैकाङ्कियात्रावृत्तसंस्मरणपत्रादीनि तस्मिन्नेव साप्ताहिके प्राकाश्यमुपगतानि । पश्चाच्च राष्ट्रस्य प्रमुखपत्रपत्रिकासु अध्येय—(सिकन्दराबाद) शाकम्भरी—(सहारनपुर) नईकहानियाँ—(इलाहाबाद) कादम्बिनी—(दिल्ली) धर्मयुग—(बम्बई) प्रभृतिषु शतमितानि काव्यानि प्रकाशितानि ।

प्रकृतमनुसरामस्तावत् । यथा प्राङ्निवेदितम्मया यत् पुण्यश्लोकपितृप्रत्यभिज्ञानप्रयतनमेव मत्कवित्वोज्जृम्भणमूलमासीत् । वारं वारं सैव पीडा मां प्रसह्य रुरोज । बेदनाख्ये खण्डकाव्ये वर्तन्ते काश्चन पंक्तयस्तद्यथा—

१. सेवाप्रेस जौनपुरमण्डलात्प्रकाशितम् । अद्यापि प्रकाश्यते ।

अल्पवय में ही बना अनाथ
स्वप्न बन गया पितृव्यवहार।
तदपि किस पूज्य पिता के हेतु
व्यथित होता मन बारम्बार ?

मुक्तधाराख्ये हिन्दीगीतसंग्रहेऽपि कस्मिश्चिद् गीते वर्तन्ते तादृश्य एव पंक्तयः। तद्यथा—

लघु जीवन में ही अनाथ बना
जनकाश्रित स्नेह हुआ सपना
फिर भी किस पूज्य पिता के लिये
मन मेरा सदा ललचाया करे ?
किस प्रेयस का अनुराग प्रिये !
मन की कविता बन जाया करे ??

शनैः शनैरियमेव प्रेष्ठान्वेषणाकांक्षा संस्कृतकवितयाऽपि मुखराऽभूत्। संस्कृतलिलेखिषायां हेतुत्रयं मम साहाय्यमकरोत्। कण्ठस्थसंस्कृतश्लोकसम्पदिति प्रथमो हेतुः। दशमकक्षातो द्वादशकक्षापर्यन्तं स्वविद्यालयीयसाहित्यपरिषत्समज्यास्वनवरतमेव संस्कृतवाचा सम्भाषणमिति द्वितीयः। स्वपितृव्यचरणैर्विद्वत्प्रवरैः डाक्टरआद्याप्रसादमिश्रैः सार्धं नितरां संस्कृतपत्रव्यवहार इति तृतीयो हेतुः। अङ्कानि प्राप्तानीति प्रमादवशाल्लिखिते सति अङ्काः सम्प्राप्ता इतिवत् पितृव्यचरणा मां स्वपत्रैरेव संस्कृतव्याकरणं व्यपाठयन्।

अयमासीत् १९६० तमस्य खिस्ताब्दस्य ग्रीष्मावकाशः। द्वादशकक्षापरीक्षानन्तरं सर्वथा निर्व्यापारोऽहमासम्। अस्मिन्नेवावसरे गीतरामचरिताख्या लघ्वी रचना मया प्रणीता। मङ्गलाचरणानन्तरं मुक्तच्छन्दसा विरचितानि दशगीतान्यासन् कृतावस्याम्। जातिवृत्तनियमज्ञानविरहितत्वात् मङ्गलाचरणोपनिबद्धं मालिनीवृत्तद्वयं सर्वथाऽशुद्धमासीत्। विविधच्छन्दसां सङ्गीतलय एवासीत् तदा मत्कृते तद्वृत्तप्रणयनप्रमाणम्। अतएव यं कमपि चिरसंस्तुतं कुमारसम्भवादिसमुद्धृतं श्लोकं गायं गायं तत्संवादि वृत्तं प्रणेतुं प्रयत्नमकरवम् तद्यथा—

निशिचरहन्तारं शुभागारं ऋषीणां मैथिलिभर्तारं हनुमता सेवितञ्च।
रघुकुलवनसिंहं सत्यसन्धं सुरेन्द्रं निजहृदि निवसन्तं रामचन्द्रं नमामि॥

व्याकरणच्छन्दोविचितिनियमोल्लंघनयुतोऽयं श्लोक इत्यत्र न कश्चन सन्देहः। तथापि सप्तदशवर्षदेशीयस्य कस्यचिद् डिम्भस्य कवित्वविडम्बनमात्रमिति कृत्वा सुधियां कृते नास्य कविकर्मणस्तिरस्कारौचित्यम्।

गीतरामचरितमद्यापि प्रकाशनमपेक्षते। १९६० तमखिस्ताब्दस्य अगस्तमासे प्रयागविश्वविद्यालये प्रविश्य साहित्यसर्जनानुकूलं रुचिरमवसरं प्राप्तवान्। समारोह-सम्भारभरिते संस्कृतविभागे प्रायेण श्लोकपाठकाव्यपाठादिस्पर्धाः प्रावर्तन्त यासु महतोत्साहेन आत्मानं प्रस्तुतवानस्मि। अत्रागत्य स्वान्तःसुखायैव मयाऽधीतं छन्दः-शास्त्रं येन काव्यप्रणयने नियमानुपालनं सुकरं जातम्। १९६१ तः १९६९ तमं खिस्ताब्दं यावत् यानि मुक्तकपञ्चकसप्तकाष्टकादीनि काव्यानि यथावसरं प्रणीतानि तेषां संकलनपञ्जिका कालिदासीया इत्यभिधा सम्प्रत्यपि मत्पार्श्वे सुरक्षिता वर्तते। अस्यैव संकलनस्य कतिपयश्लोका मया नाट्यपञ्चगव्यस्थेषु एकाङ्करूपकेषु यथारुचि प्रयोगविषयीकृताः।

वाग्वधूटीति काव्यसंग्रहस्य भूमिकायां सार्जवं मया स्वीकृतं यद् आचार्य-जानकीवल्लभशास्त्रिवर्यस्य पण्डितप्रभातमिश्रस्य च मुक्तगीतानि पाठं पाठं मया तादृक्कविकर्मप्रेरणाऽवाप्ता। अतएवात्मानं तयोः कवितल्लजयोरधमर्णं स्वीकरोमि। अस्मिन् प्रसङ्गेऽस्ति कश्चिद् विशेषो यमनिवेद्य परितोषं न लप्स्ये।

अस्य शताब्दस्य सप्तमे दशके साम्प्रतिका इव संस्कृतकविसमवाया विरल-प्रचारा आसन्। केवलं यत्र कुत्रापि समस्यापूर्तिपरा संगोष्ठी समायोज्यतेस्म। दूर-दर्शनन्तु नाम्नैव श्रुतचरमासीत्। आकाशवाणीतोऽपि केवलं स्तोत्रपाठादिकाः कार्यक्रमाः प्रसारिता अभूवन्।

हिन्दीकविसम्मेलनेषु सर्वजनस्नेहभाजनतामुपगतोऽहं कदाचित् गोण्डाजन-पदस्थे किंगजार्जविद्यालये प्रतिष्ठायाः परां कोटिमधिरूढं हिन्दीगजलगीतिसमुन्नति-सुमेरुं कविवर्यं श्रीबलवीरसिंहरंग-महोदयं तमिस्रापचयं यावत् श्रुतवान्। एका गीति-र्मर्माणि भिन्दन्तीव मां रागविसंष्ठुलं कृतवती—

हमने निगाहे यार का पैमाना बना डाला
यूँ कहिये कि एक दूसरा मैखाना बना डाला !!

कविसम्मेलनेऽवसिते सति प्रयागं प्रतिनिवर्तमानेनैव मया मध्येपथं गीतं यदन्नूदितं देववाण्या—

नयनं मया प्रियायाश्चषकीकृतं रे बन्धो !
अथवाऽपरं सुराया भवनं कृतं रे बन्धो !!

इदमेव संस्कृतगीतं मया उन्नावनगरायोजिते हिन्दीकविसम्मेलने संयोजकस्य डॉ० निशानाथदीक्षितस्यानुरोधवशाद्यदा मध्येशालमाश्रावितं तदा निपीय वृन्दारक-गवीरसमाधुरीं सर्वेऽपि सहृदया हर्षसम्भारोन्मत्ताः समदृश्यन्त। तदाप्रभृत्येव सर्वेष्वेव कविसम्मेलनेषु हिन्दीकाव्यैस्साधं मत्तः संस्कृतगीतश्रवणपरम्परा प्रावर्तत सहृदयानाम्।

संस्कृतगीतस्य लोकप्रियतां परतः प्रामाण्येन निभाल्य समनुभूय च सावधानमनसा मया यथायोग्यं नवनवानि स्वोपज्ञानि गीतानि प्रणीतानि येषां प्रथमतममासीत्—

मधुरं विचिन्तयामो मधुरं हि मानसे स्यात् !
मधुरे तु जीवनेऽस्मिन् माधुर्यमेव भूयात् !!

दीवानहालाख्ये सभामण्डपे दिल्ल्यां समायोजिते कविसमवाये डॉ० माइणकरमहाभागानां सभापतित्वे गीतमिदं २२ जनवरी ६९ मिते वर्षे सोत्साहं प्रस्तुतम्मया समेषाञ्च संस्कृतानुरागिणां साधुवादाः सम्प्राप्ताः। संस्कृतगीतरचनापरम्पराया अयमासीदादिम उपक्रमः। शनैः शनैः शबलतामुपयान्ती विषयवैविध्यं वृण्वती शैलीविकल्पांश्च स्वीकुर्वती गोमुखान्निर्गता सैव प्रतनुकलेवरा गीतगङ्गा उत्तरोत्तरं विस्तारं भजमाना रसिकजनहृदयोद्देशान् अभिसिषेच।

स्वकाव्ययात्राविषये किम्मया वक्तव्यमासीत् किञ्च मयोक्तमिति सम्प्रत्यपि न जाने। कवित्वसमीक्षापटीयसी धिषणा विद्वत्प्रवराणां डॉ० राधावल्लभत्रिपाठिनां किमपेक्षितवती काव्यपथपथिकादस्मादित्यपि सन्देहगर्भं तथ्यम्। तथापि स्वकवित्वमूलवृत्तं प्रस्तोतुं समीहे। पर्वतस्कन्धं शिखरसमूहं वा को न पश्यति ? पयोधिकल्लोलचक्रवालं न्यग्रोधमहाविस्तारं वा को न प्रत्यक्षमक्षिलक्ष्यीकरोति। तत्र का विचिकित्सा, किमाश्चर्यं को वा विशेषः ? परन्तु पर्वतपयोधिन्यग्रोधादीनां रहस्योद्घाटने भवत्येव विशेषः।

एवमेव अभिराजराजेन्द्रेण मया कानि कानि काव्यानि कदा कथं किन्निमित्तं वा प्रणीतानीति प्रश्न एव वैधेयवाङ्निर्विशेषः। वस्तुतः काव्ययात्रा कथं प्रवृत्तेतिमात्रं महत्त्वपूर्णम्। प्रस्तावनाऽतिशेते निखिलमपि नाट्यसंविधानकम्। सन्ततिजननाच्छतगुणमहीयसी भवति सन्ततिजननपीडा। सा पीडैव वन्द्याऽभिनन्द्या च भवति। यतो हि दुस्सहव्यथाज्वालाभिरात्मचेतनां द्रढीयसीं द्रवीकृत्य स्वयं कविरेव काव्यरूपेण परिणमति। अतएवासौ दहननिस्यन्दनप्रक्रियैव कविकर्मसर्वस्वभूता। अनयैव प्रक्रियया सर्वेऽपि वाल्मीकिव्यासकालिदासभवभूतिभर्तृहरिप्रभृतयः सारस्वतसाधकाः पुराकाले परीक्षिताः।

किञ्च, काव्यमिति पदमपि भूरिविस्तरम्। सर्वप्रथमं दृश्यश्रव्यत्वभेदेन द्विधा भिन्नम्। दृश्यकाव्यमपि दशरूपकैरष्टादशमितोपरूपकैश्च अष्टाविंशतिधा विभक्तम्। ततश्च श्रव्यकाव्यं शैलीदृष्ट्या गद्यं पद्यमिति च द्विधा। गद्यं कथाऽऽख्यायिकोपबृंहितम्। पद्यञ्चापि मुक्तकखण्डकाव्यमहाकाव्यादिशाखामयम्। तत्र च भाणप्रहसननाटिकैकाङ्ककथामुक्तकखण्डकाव्यमहाकाव्यानि प्रणयन्नपि नाहं समेषां विवेचनं

प्रस्तौमि। वस्तुतः स्वोपज्ञं साहित्यं शीर्षत्रयेण व्यवस्थापयितुमीहे—नाट्ययात्रा, कथायात्रा, काव्ययात्रा चेति। काव्ययात्रायां केवलं पद्यपरम्परापरिचयो दीयतेऽत्र।

यत्किञ्चित् प्रेक्षावतां कृते हस्तामलकमिव प्रतीयते क्वापि तदेव सञ्जायते गन्धर्वनगरमिव कल्पनामात्रं नवीनेभ्यः। मदीया काव्ययात्रा साकल्येन प्रत्यक्षीक्रियेत सुकुमारमतिभिः प्रत्यग्रपान्थैः प्रौढैः ज्येष्ठसूरिभिश्चेति कृत्वाऽद्यावधि प्राकाश्यमागतानां षोडशमितानां दृश्यश्रव्यकाव्यानां कालक्रमानुसारं समुल्लेखः क्रियते पश्चाच्च काव्यमर्मसमीक्षा सविशेषं प्रस्तोष्यते।

गीतरामचरितम् (१९६०) कालिदासीया (१९६९) चेति रचनाद्वयमप्रकाशितमिति पूर्वमेव निवेदितम्। ततश्च प्रकाशितासु रचनासु नाट्यपञ्चगव्यम् (१९७१) अकिञ्चनकाञ्चनम् (१९७४) आर्यान्योक्तिशतकम् (१९७५) नवाष्टकमालिका (१९७६) नाट्यपञ्चामृतम् (१९७७) वाग्वधूटी (१९७८) पराम्बाशतकम् (१९८१) चतुष्पथीयम् (१९८३) प्रमद्वरा (१९८४) मृद्वीका (१९८५) इक्षुगन्धा (१९८६) रूपरुद्रीयम् (१९८६) शताब्दीकाव्यम् (१९८७) अभिराजसप्तशती (१९८७) जानकीजीवनम् (१९८८) श्रुतिम्भरा (१९८९) च सन्ति। विंशतिलघुरूपकाणां संकलनभूता रूपविंशतिका वामनावतरणाख्यं महाकाव्यञ्चेत्युभयं सम्प्रति मुद्रणाधीनं वर्तते।

यानि काव्यानि बालीद्वीपीये प्रवासे प्रणीतानि तेषां मृगाङ्कदूतं बालीविलासञ्चेति द्वयं संस्कृतप्रतिभायां, विमानयात्राशतकं देववाणीहुङ्कारशतकं यवसाहित्यशतकं बालीप्रत्यभिज्ञानशतकञ्चेति चतुष्टयम् अर्वाचीनसंस्कृते, सुरभारतीदण्डकं राङ्डा[1] चेति द्वयं दूर्वायाम् अभिनवपञ्चतन्त्रं वामनावतरणमहाकाव्यञ्चेति द्वयं पारिजाते यथावसरं प्रकाशितानि सन्ति।

श्रद्धेयमहापुरुषप्रशस्तिपराणां यथावसरप्रणीतानां प्रायेण पञ्चाशन्मितानां श्लोकाष्टकानां संग्रहो मदुपज्ञं नाराशंसि काव्यम्। अप्रकाशितमिदं काव्यं 'कस्मै देवाय हविषा विधेम' इत्यभिधं गान्धिमालवीयजवाहरलालराजेन्द्रबाबूपुरुषोत्तमदासप्रो० शार्पेशशिधरशर्मविद्यानिवासश्रीनिवासरथहरिश्चन्द्रपतिप्रभृतीन् साहित्यराजनयलोकोपकारनिरतान् महापुरुषान् विशिनष्टि समुचितैश्चरिताभिशंसिभिर्विशेषणैः। ततश्च चोरशतकाख्या कृतिर्विल्हणपरम्परां पुष्णाति। अभिराजशतकञ्चापि स्वानुभूतिपराणां वचोनिःश्वासानां सङ्कलनम्।

अयमस्ति मत्काव्ययात्रासरणिविस्तारः। सम्प्रति काव्यानि प्रामुख्येण परिचीयन्ते। प्रकाशितरचनासु आर्यान्योक्तिशतकं मदुपज्ञं प्रथमं काव्यम्। अन्योक्ति-

१. अस्य कथासंग्रहस्य द्वे कथेऽधिदूर्वं प्रकाशिते। तृतीयाऽपि तत्रैव प्राकाश्यमेष्यतीति दिक्।

वाङ्मयमधिकृत्यैव मया शोधकार्यं निष्पन्नम्। अतएव नवमशतकोत्पन्नाद् भल्लटादारभ्य विंशतिशतकोत्पन्नं महालिङ्गशास्त्रिणं यावत् स्वायत्तीकृताः सर्वेऽप्यन्यापदेशविषया मया गवेषिता आसन्। तत्सर्वं विवेच्यापि मनसि मेऽभूत्तूहत ! आधुनिकाः शतमिवा विषयाः कविभिः क्व संस्पृष्टाः ? प्राचीनाश्चापि कियन्त एव प्रतीकभूताः पशुपक्षि-कृमिस्थावरादिविषयाः प्रायेण उपेक्षिता एव तिष्ठन्ति। तर्हि कथं न खल्वहमेव किञ्चिन्नवीनं लिखानि ? आर्याख्यं छन्दोऽपि समुपेक्षितमेवान्यापदेशकारैः कविभिः।

एवं हि स्वानुभवसंवेद्यनवीनत्वोपस्थापनगार्ध्येनैव प्रेरितोऽहं कृतिमिमां प्रणीतवान् न पुनः कवियशोलिप्सया। शतकमिदम् आर्याभिरेव प्रणीतमित्यपरं वैशिष्ट्यम्। अन्यापदेशप्रतीकभूता अश्वत्थकदलीमालाकारजीरकोदुम्बरपनसलशुनखर्जूरकण्टकारि-करीरशेफालीडुण्डुभलूतामंत्री (M.L.A.) मार्दङ्गिकसारमेयप्रभृतिविषयाः सर्वथा नवीना एवेत्यत्र विद्वज्जना एव प्रमाणम्। तद्यथा—

निष्कृपकृपाणपाणिर्वधिकजनोऽसौ शतपशुविनिहन्ता।
पश्यायं जरदस्थिः प्राप्तविमानो वृथा जीवति॥
शुक ! मुकुलितजिह्वत्वं भज वेलेयं न वाक्पटुतायाः।
जर्जरकवाटकोणेऽत्रैव बिडालो मूषिकमत्ति॥

उदयति नभसि दिनेशे विकसन्ति न खिलकुसुमानि किमनेन ?
श्लाघ्या खलु शेफाली निबिडनिशीथेऽपि या विकसति॥

नवाष्टकमालिका मदुपज्ञं स्तोत्रकाव्यम्। अत्र पृथ्वीवृत्तैश्शारदायाः शिखरिणीवृत्तैः पराम्बायाः पञ्चचामरैः महाकालशिवस्य वसन्ततिलकैर्नारायणस्य शार्दूलविक्रीडितैः श्रीरामभद्रस्य तोटकैर्गोविन्दस्य स्रग्धराभिर्मारुतेः मात्रागीतैश्च गणपतेः कवीश्वरस्य च समर्चना मया कृता वर्तते। गोविन्दवन्दनं यथा—

यमुनातटकेलिकलानिपुणं वृषभानुसुताश्रितवामपदं
नवनीलबलाहकचारुतनुं कलया हृतकामकुमारमदम्।
वरवेणुनिनादपरम्परयैव वशीकृतलोकमुदारवरं
मधुराधिपतिं कलयामि मुदा व्रजबल्लववारदुकूलहरम्॥

कृतवञ्जुलपीलुकदम्बकरीरनिकुञ्जकुटीरदिवाशयनं
वृषभानुजया सह संल्लपनैर्मदिरायितभूरिचलन्नयनम्।
मृदुशीतलमन्दसुगन्धसमीरणसेवितसौम्यतनुं मधुरं
यदुवंशरविं कलयामि मुदा युधिपार्थपितामहतोषकरम्॥

मधुराभिधानाख्ये कविस्तवने काव्यकुञ्जं प्रस्तुवता मयोक्तम्—

भासप्राकारमूर्ध्वं गगनपरिमितं दण्डिकुल्यं गभीरं
भट्टिश्रीभर्तृमेण्ठप्रवरतरुवृतं कालिदासाम्बुवर्षम् ।
मंखश्रीनीलकण्ठप्रमदपिकयुगं श्रीजगन्नाथहंसं
वन्दे सूक्त्यालवालंसुकविखगकुलंमञ्जुलं काव्यकुञ्जम् ।।

वाग्वधूटी मृद्वीका चेति नवगीतसङ्कलनद्वयम् । उभयोः प्रायेण शतमितानि गीतानि वर्तन्ते । एषु गीतेषु मदीया निःश्वासततयो निबद्धाः । क्वचिद् राष्ट्रं क्वचित्प्रकृतिः क्वचिद् जिजीविषा क्वचिद् रूपसौन्दर्यप्ररोचना क्वचिद् विश्वैकात्म्य-दिदृक्षा चेति भावशाबल्यं वर्तते । गीतानि प्रायेण पूर्वाग्रहमुक्तानि, तथापि क्वचिदह-मपि सहजतया दृश्ये—

श्रृणोति कोऽपि न मे वाचिकं ददे कस्मै ?
वृणोति कोऽपि न मे वाचिकं ददे कस्मै ??
व्यथाकथेयमहो मामकी पुरावृत्ता
अनिर्व्यथे हि सवे वाचिकं दधे कस्मै ??
अये ममाम्रतरौ दृश्यते नु निम्बफलम्
स्वभाग्यचक्रमिदं वाचिकं सुवे कस्मै ??

—वाग्वधूटी/७५

यथा वा, क्वचिदपि ललाटपट्टे सौभाग्यविन्दुरासम्
दिवसा गता हि ते नो जीवामि भूतलेऽहम् !!
निर्मापितं न जाने केनेदमूर्ध्वहर्म्यम्
मम खण्डितावशेषे जीवामि भूतलेऽहम् !!
कुप्यानि हन्त कस्मै भाग्याम्बरे मदीये
ज्योत्स्ना घनैः परीता जीवामि भूतलेऽहम् !!
लोकानुरागमूलं लोकाभिशापशूलं
शीर्षे निधाय सर्वं जीवामि भूतलेऽहम् !!

—मृद्वीका/३५

यदसमीचीनम् असमञ्जसं लोकमङ्गलविनाशकरं वा तत्सदैव मामुद्विग्नम-करोत् । स एवोद्वेगो गीतीभूय प्रावर्तत—

निजाऽभ्यस्तमार्गे विरूढाश्मखण्डान्
अपाकर्तुमेव प्रयत्नानकार्षम् ।
तदध्यात्तवैरैः सुहृद्भिर्न सोढं
परिव्राजनस्मे सदाऽऽतङ्कितं रे !!

यथा वा, शास्त्रचर्चां विधत्से सुरामन्दिरे
भासि बन्धो ! पशुस्त्वं विषाणं विना !!

पश्य दुश्चेष्टितं मृत्तिकामानवः
क्लिश्यते व्योम रोद्धुं विमानं विना !!
नैव नृत्यं न गीतं न वा चर्चरी
उत्सवः कीदृशोऽयं वितानं विना !!
जीवनं रोचते नो विधानं विना
मोदते नैव हंसो निपानं विना !!
—मृद्वीका/४४

यथा वा, द्रुतं भञ्जितास्तटमर्यादाः
ऋग्भूता अभिनयसंवादाः
शतधा द्रवति कुसंस्कृतितटिनी नितरां तटङ्कषा
म्रियते जिजीविषा !!
भस्मासुर इव शिवं स्वतंत्रम्
दग्धुं धावति किल जनतंत्रम्
स्वार्थान्धतागिरिजया छलिता नेतारो विवशाः
म्रियते जिजीविषा !!
तिमिङ्गिलो निगरति लघुमीनम्
धनदो जठरे क्षपयति दीनम्
मरुसिकतायां छलयति हरिणं कुटिला सलिलतृषा !!
—मृद्वीका/६५

नाहं प्रत्यहं लिखामि न वा प्रतिसप्ताहं प्रतिमासं वा । काव्यप्रणयने न कोऽपि नियमो न पूर्वाग्रहः पूर्वानुरोधो वा । कदा कथं कस्मात् कुत्र कियत्कालपर्यन्तं वा लिखिष्यामि इति सर्वमेव कालपुरुषाधीनम् । अन्तःप्रेरणाभावे सर्वथा मौनमास्थाय वैधेय इव तिष्ठामि । मासं यावत् न किञ्चित्करोमि । परन्तु यावदेव मल्लिकाक्ष-वाहिनी प्रह्वीभवति, मयि दयते वा, निखिलमेव काव्यं निर्मीयते अल्पेनैव काल-खण्डेन । तत्सर्वं पराम्बाया महामायाया विजृम्भितम् ।

पूर्वसंस्तुतं पिष्टपेषणपरं वा किञ्चित् न प्रणेष्यामीति दृढः संकल्पः । कियत्सा-फल्यमवाप्तं नवीनयोगदानसन्दर्भे इति तु न जाने । तथापि प्रयतनं कृतमित्येवात्म-सन्तोषः ।

पराम्बाशतकाव्ये स्तुतिकाव्ये प्राचीनां विशेषणसम्बोधनमात्रैकपद्धतिमपहाय मयाऽत्मनिवेदनं कृतम् । प्रणयनकाले तु एतदपि न ज्ञायतेस्म दैन्यार्तिव्यथाप्रवाहा-पहृतात्मप्रत्यभिज्ञानत्वात् । किन्तु सम्प्रति समीक्षकधिया किञ्चिद् अनुभवामि । तद्यथा—

कदा त्वद्गृहद्वारकोणेषु मातः प्रभाते सुखं मार्जयामि प्ररोहान् !
इदं चिन्तयन्नैव शक्नोमि भोक्तुं त्वमेव त्वमेव त्वमेवाम्ब पाहि !!

कदा वेणिकाबन्धयोज्यं प्रसूनं भृशं मार्गयन् वाटिकासु प्रभाते।
निदेशं प्रियं तावकं निर्वहामि त्वमेव त्वमेव त्वमेवाम्ब पाहि !!

कदा पञ्जरे रत्नमाणिक्ययुक्ते शुकीभूय गायामि ते युद्धशौर्यम्।
कदा दाडिमं त्वत्करेणाद्मि मातस्त्वमेव त्वमेव त्वमेवाम्ब पाहि !!

समाजोऽथ मां निन्दति प्रत्यहं किं समाराधते शंसति प्रत्यहं किम् !
समाजो मृतो जीवितो वाऽथ मे किं त्वमेवत्वमेवत्वमेवाम्ब पाहि !!

शरीरे च्यु तेते भवेदाभिमुख्यं तदा दृश्यते क्वान्धदृष्टिस्समाजः !
भवत्यावयोरन्तरे सत्यमेकं त्वमेव त्वमेव त्वमेवाम्ब पाहि !!

अभिराजसप्तशत्यामपि सर्वं नूतनमेव। प्रभातमंगलशतके राष्ट्रैक्यं लक्ष्यीकृत्य प्रतिपदमेव नवीनं प्रभातस्मरणं कृतम्। पश्यन्तु—

वाल्मीकिपाणिनिपराशरनन्दनाश्च
बोधायनो वररुचिः प्रथमे कवीन्द्राः !
गर्गोऽथ भासमुनिरित्थमिमे च सप्त
कुर्वन्तु मे सुभगमंगलसुप्रभातम् !!

संकेतकाकुवचनेङ्गितशब्दयोगैः
शब्दाधिकं प्रियतरं किल भाषमाणः !
सारस्वतामृतघटः कविकालिदासः
नित्यं तनोतु मम मंगलसुप्रभातम् !!

श्रीहर्षमाघजयदेवकुमारदासाः
बाणोऽथ भट्टिभवभूतिकिरातकाराः।
श्रीविल्हणः प्रथितपण्डितराजिराजः
कुर्वन्त्विमे दश ममामृतसुप्रभातम्।।

ज्ञानेश्वरश्च तुलसी नरसी च मीरा
चैतन्यनानककबीरसमर्थसंज्ञाः।
आण्डालभक्तरविदासमुखाश्च सन्तः
कुर्वन्तु मे मधुमयं नवसुप्रभातम्।।

कस्यापि नो रिपुरहं क्रियया भवेयं
नान्योऽपि मे भवतु कोऽपि मुधैव वैरी।

मद्देहभस्मनिचयैर्भवतात्परेषां
सौख्यं तदेव मम मंगलसुप्रभातम् ।।

तुष्यन्तु नाम यदि मां नितरां विनिन्द्य
मिथ्याकलंकवचनैरपि वा सभाज्य ।
केचित्तदेव मम जन्मकृतार्थता स्यात्
तेषां कृते भवतु मे नवसुप्रभातम् ।।

क्षारं व्यथार्णवजलं हृदयस्थितम्मे
दृष्ट्वा परापकृतिपार्वणचन्द्रिराभाम् ।
प्रोज्जृम्भते नयनयोर्यदि बिन्दुपातै-
स्तन्मे प्रभो ! भवति मंगलसुप्रभातम् !!

भवतु नाम काव्ययात्रा लघ्वी । परन्तु यात्रावर्णनन्तु आनन्त्यमुपैति वक्तृबोद्धव्यवैशिष्ट्यवशात् । अतएव विरमामि । न पुनः अध्वपरिश्रमवशादपितु सुदीर्घयात्रोदन्तश्रवणोद्वेगवशात् । भवन्तोऽपि सर्वे शैथिल्यमुपगताः श्रावं श्रावम् । अतएव सद्यः प्रकाशितं नव्यप्रस्थानं स्वोपज्ञमहाकाव्यं जानकीजीवनं बालीप्रवासविरचितं वाङ्मयञ्च न चर्चाविषयीकरोमि । यथा पुष्पं वृक्षात्पृथग्भूतं नश्यति तत्सम्पृक्तं च जीवति शोभते, सर्वथा तथैव परम्पराविच्छिन्नः साहित्यकारो ध्वंसते । परम्परापरिवर्तनाय परम्परावलम्बनं सर्वथाऽनिवार्यं भवति । यूकान्यायेनैव प्रगतिः सम्भवति । अतएव नाहं परम्पराविरोधी । परम्परां पुष्णन्नेव तां परिवर्तयितुं समीहे । तस्मादेव प्रतिसर्गान्तमुक्तम्मया जानकीजीवनमहाकाव्ये—

मूलं श्रीकविकालिदासकविता श्रीहर्षवाणीतनुः
पत्रं श्रीजयदेवदेववचनं श्रीबिल्हणोक्तं सुमम् ।
श्रीमत्पण्डितराजकाव्यगरिमा यस्य प्रपूतं फलं
जीव्याद्धन्त निसर्गजोऽयमभिराड्राजेन्द्रकाव्यद्रुमः ।

बह्वोः कालान्मनसि सयत्नं गोपिता विवक्षाऽद्य शान्ता जाता । पाठकैः सुहृद्भिः सहृदयैश्च सार्धं यावत् साक्षात् हृदयसंवादो न जायते तावत् क्वात्मतोषः सरस्वतीपुत्रस्य ? वैषम्येष्वपि सामञ्जस्यम्, अभावेष्वपि सद्भावं, जगत्प्रपञ्चोपजातवैक्लव्येष्वपि चिदानन्दमनुभवन् सम्प्रत्यात्मानं परमसुखिनमवैमि । यं कमेव पश्यामि मत्तोऽप्यधिकविषण्णः सन्दृश्यते । ये सुधाकुम्भे निलीनास्तेऽपि विषपानमूर्च्छिताः ! कीदृशमुच्चावचमनेहसि दृश्यते !

सामान्यजनोपभुज्यमानं तादृशं दुःखैकसारं संसारमवधूय, कच्छप इव स्वाङ्गानि वपुषि संहृत्य च स्वरचितां सारस्वतीं सृष्टिं जीवामि । अत्र सर्वत्र सुखमेवास्ते ।

नात्र दुःखं, न वेदना, न परातिसन्धानं, न विश्वासघातो, न वाऽमर्षः ! सौहृदमात्रं प्रभवति सर्वत्र । अतएव धीरललितनायक इव नित्यमेवानुस्मरामि —

निन्दावादविमुक्तमेव कवनं गोष्ठीरसज्ञैर्मतं
क्रीतोत्कोचधनैर्न वागमृतपा चैतन्यमात्मस्थितम् ।
सौहार्दे सुहृदः स्थिताः प्रियजने ख्याता च मद्वल्लभा
कीर्तिस्साधुमनोऽनुरञ्जनकरी किम्मेऽपरं काङ्क्षितम् !!

एभिरेवाकृतकपरितोषवचनैः प्रत्यग्रगीतसङ्कलनां श्रुतिम्भरां सुरभारतीरसज्ञानां करकमलेषु सविनयमुपायनीकरोमि । गीतान्येतानि विगतेषु पञ्चसु वर्षेषु यथाऽवसरं यथारुचि मयोपनिबद्धानि । सारल्यं प्रक्रान्तविषयत्वं लोकसङ्गीतसंवादित्वं सुलघुप्रयासगम्यत्वञ्चेति मदुपज्ञगीतसंरचनोद्देश्यम् । तत्र सहृदयपाठका एव प्रमाणम् ।

गीतप्रकृतिपरिज्ञानसौकर्यार्थमेव गीतजातं पञ्चधा विभक्तं तद्यथा— संस्कृतध्वनिः राष्ट्रध्वनिः प्रवासध्वनिर्निसर्गध्वनिरात्मध्वनिश्च । वर्षद्वयात्मके बालीद्वीपप्रवासे (मई ८७ तः अप्रैल ८९ यावत्) लिखितानि गीतानि प्रवासध्वनौ गुम्फितानीति विशेषः । संकलनेऽस्मिन् केवलं गीतान्येव प्रकाश्यन्ते न तावद् वृत्तोपनिबद्धा रचनाः । तासां प्रकाशनमन्यत्र कर्तुमिष्यते ।

सारस्वत्याहुतिरियं सारस्वतेभ्यः सहृदयेभ्यस्स्वाहा । इयं न मम । विश्वसिमि यद्गीतसंग्रहोऽयं पूर्वमपि प्रायेण बहुभिर्वयस्यैः सहृदयैश्च कविसमवायेषु श्रुतचरोऽधुना प्रकाशितस्सन् समेषां स्नेहमाशिषञ्चोरीकरिष्यति !

मार्गशीर्षपूर्णिमा

१२ दिसम्बर १९८९ ई०

विदुषामनुविधेयः

राजेन्द्र मिश्र

# गीतानुक्रमः

## संस्कृतध्वनिः


सुमधुररचना ! : २१
रमयति नहि कम् ? : २२
संस्कृतमयं भवतु मम राष्ट्रम् ! : २३
राष्ट्रभारती भवतु संस्कृतम् ! : २५
न मृता म्रियते न मरिष्यति वा ! : २६
कारुण्यशृङ्गाटके ! : २७
भवभूतिरेव मह्रीयते ! : २९


## राष्ट्रध्वनिः


भारतं वन्दे !! : ३३
जयताद् भारतराष्ट्रम् ! : ३४
रक्ष मदीयं देशम् ! : ३५
कीदृशी स्वतन्त्रता ? : ३६
रक्तरञ्जितं दृश्यतेऽद्य भारतम् ! : ३८
निर्झरी हन्त कूलङ्कषा ! : ४०


## प्रवासध्वनिः


जलधर ! नय सन्देशम् ! : ४३
स्मृतिमञ्चति स्वदेशः ! : ४४
महीयसीयं भारतभूमिः : ४५
भारतं कीदृशं वर्तते ? : ४६
क्वासि गुरो गोविन्द ! : ४७
बाल्यां निखिलं भारतायते ! : ४९


## निसर्गध्वनिः


मेघो वितरति बहु-बहु वारि ! : ५३
वसन्तो भुवमवतरति सुखाय ! : ५५
दीपकमाला : ५७
गङ्गा विलसति ! : ५८
कावेरी : ५९

पुरुरूप सागर ! :
दक्षिणाशावनी शोभते ! :
शिलादुर्गमन्दिरम् :
मिहिरावलिः :

आत्मध्वनिः

विलसति गौरी ! :
मञ्जुरूपे त्वदीये ! :
पदं-पदं भूरि धूतम् ! :
प्रथिता सुवर्णता मे ! :
युगं वर्तमानं प्रणम्यम् ! :
क्वचिन्नास्ति सौख्यम् ! :
सहसा प्रयातम् ! :
मणिकर्णिकाघट्टे :
हरते मनोऽभिराजः ! :

प्रागल्भ्यं काश्यपोऽस्याः प्रणतिपरिमितो बच्चुलालोऽपि मानः
कारुण्यं श्रीनिवासस्स्मितचटुलकला भास्करो वल्लभोऽङ्कः !
रोषः कान्तो रमाया निभृतरसकथा दीक्षितव्यूढपुष्पा
लावण्यञ्चाभिराजो जयति नवनवा संस्कृता वाग्वधूटी !!

## सुमधुररचना !

मदयति नहि कं सुमधुररचना !
नवरुचिरपदा मधुमयवचना !!

क्वचिदमरधुनीव धुनोति कलिम्
विलसति रमणीव तनोति रतिम्

क्वचिदुन्मादयति विशदमदना !
मदयति नहि कं सुमधुररचना !!

सान्त्वयति विपदि सुखयति सदने
अवतरति कदाचिदियं नयने

भुवि मूर्तिमतीव कलितकरुणा !
मदयति नहि कं सुमधुररचना !!

अनुरागमयी रसरागमयी
प्रस्तरनिवहेऽपि परागमयी

अधरीकृतभावुकदयितजना !
मदयति नहि कं सुमधुररचना !!

जननीव कदाचिदियं दयते
दयितेव रतिं क्वचिदातनुते

स्निह्यति भगिनीव विनतवचना !
मदयति नहि कं सुमधुररचना !!



## रमयति नहि कम् ?

रमयति नहि कमहो मम सुमधुररचना !
सुरतटिनी सरसा हरिपदनतयमुना !!

निकृतिविकृतिमलिनं भवति यदा व्यथितम्
ननु जननीव मनश्शमयति मृदुवचना !!

कठिनविरहरजनीं शतशतयुगमहतीम्
शमदमधैर्यगुणैर्गमयति रससदना !!

इयमवतरति मनस्यमरधुनीव शुभा
नवरसभावमयी लहरिवलितपवना !!

नवपीयूषघटं पदनिचयैर्दधती
गुम्फनचन्द्रिकया वारितखरतपना !!

कविकुलगुरुगरिमा माघमहितमहिमा
ननु भवभूतिधृता सहृदयहृदयधना !!

संसृतिगरलमृतं कविमभिराजमहो
सञ्जीवयतितरां सैव करुणनयना !!



# [सं]स्कृतमयं भवतु मम राष्ट्रम् !

संस्कृतमयं भवतु मम राष्ट्रम् !
नवगौरवं दिशतु मम राष्ट्रम् !!

पुनरुद्भवेत् त्रयीसन्देशः
उपनिषदां सौराज्यनिवेशः

द्युतिवैभवं धरतु मम राष्ट्रम् !
नवगौरवं दिशतु मम राष्ट्रम् !!

प्रीतिरस्ति संस्कृते न केषाम्
उत्तरदक्षिणवतां समेषाम्

सुहृद्भावमञ्चतु मम राष्ट्रम् !
नवगौरवं दिशतु मम राष्ट्रम् !!

काञ्च्यां शिवशिवः कैलासे
को नु विभागो नवमधुमासे

सामञ्जस्यमेतु मम राष्ट्रम् !
नवगौरवं दिशतु मम राष्ट्रम् !!

विना संस्कृतं कुत्र संस्कृतिः
विना संस्कृतं कुत्र निष्कृतिः

तत्त्वमिदं कलयतु मम राष्ट्रम् !
नवगौरवं दिशतु मम राष्ट्रम् !!

संस्कृतमस्ति बन्धुताभाषा
समतास्नेहचरितपरिभाषा

सुरभारतीमवतु मम राष्ट्रम् !
नवगौरवं दिशतु मम राष्ट्रम् !!

ये संस्कृतविरोधिनो जाताः
तेषां भवतु परेशस्त्राता
तान् मर्षयतु सन्ततं राष्ट्रम् !
नवगौरवं दिशतु मम राष्ट्रम् !!

भाषेयं दुर्भावनशमनी
राष्ट्री च वसूनां सङ्गमनी
सम्भूषयतु सदा मम राष्ट्रम् !
नवगौरवं दिशतु मम राष्ट्रम् !!



## राष्ट्रभारती भवतु संस्कृतम् !

राष्ट्रभारती भवतु संस्कृतम् !
लोकभारती भवतु संस्कृतम् !!

सर्वासां वाचां जनयित्री
भारतीयभावनासवित्री

लोकमङ्गलं दिशतु संस्कृतम् !
राष्ट्रभारती भवतु संस्कृतम् !!

वेदपुराणोपनिषल्लीनम्
कालिदासकविताजलमीनम्

निखिलभारतं पठतु संस्कृतम् !
राष्ट्रभारती भवतु संस्कृतम् !!

राष्ट्रियपशुः केसरी घुष्टः
गृहे-गृहे तत् किमसौ दृष्टः

महिमानं घोषयतु संस्कृतम् !
राष्ट्रभारती भवतु संस्कृतम् !!

संस्कृतमखिलभारतीमूलम्
अपनेष्यति नूनं हृच्छूलम्

हृन्दि हृदा बध्नातु संस्कृतम् !
राष्ट्रभारती भवतु संस्कृतम् !!

भवतु संस्कृतं राष्ट्रियभाषा
नूनमुदेष्यति सहृगमनाशा

नवराष्ट्रं विदधातु संस्कृतम् !
राष्ट्रभारती भवतु संस्कृम् !!



## न मृता, म्रियते न मरिष्यति वा !

न मृता, म्रियते न मरिष्यति वा !
सुरवागमृता सुखदा वरदा
द्विषतां निर्यातं रचयिष्यति वा !

निगमागमगीतमयी रुचिरा
रघुनाथकथामहिता मधुरा !
पुनरद्य दशाननकर्मरतान्
घननादमुखान् निहनिष्यति वा !
न मृता, म्रियते न मरिष्यति वा !!

नरपालभगीरथसङ्कलिता
सुरसिन्धुरियं गगनाद्गलिता !
विशदाश्रमभव्यविनाशपरान्
अभिशप्तजनान् क्षपयिष्यति[1] वा !
न मृता, म्रियते न मरिष्यति वा !!

इयमार्षतपोनिधिसञ्चयिनी
स्वगुणैर्महिता वसुधोज्जयिनी !
इयमञ्चितसंस्कृतिकीर्तिकथा
अधुनाऽपि भुवं कलयिष्यति वा !
न मृता, म्रियते न मरिष्यति वा !!

अमृतादधिकं परिपोषकरी
सुकृतादधिकं भवदोषहरी !
पदबन्धरसामृतकुम्भचयैः
चितिनीरसतां रसयिष्यति वा !
नमृता, म्रियते न मरिष्यति वा !!



१. क्षप् १०u, क्षेपे प्रेरणे च, to send, to direct.

कारुण्यभृङ्गाटके !

वेदशास्त्रेतिहासत्रिवेणी नवा
ज्ञानविज्ञानशैलेन्द्रसानूद्भवा ।
निर्जरैर्नन्दिता कोविदैर्वन्दिता
क्लिश्यते साऽद्य नग्नाटिनां नाटके !!
देववाणी व्यथोच्छूननेत्राऽधुना
हिण्डते हन्त ! कारुण्यभृङ्गाटके !!

दुग्धदोहा न सा, नैव पीतोदका
नोऽप्रजा नैव वन्ध्या, न सुप्तेन्द्रिया ।
घुष्टहम्भारवा, वत्सला नन्दिनी
संस्कृता वागियं पातिता पातके !!
देववाणी व्यथोच्छूननेत्राऽधुना
हिण्डते हन्त ! कारुण्यभृङ्गाटके !!

क्वाद्य मे विक्रमोऽसौ विशालेश्वरः
साहितोसूत्रधारो नु धारेश्वरः ?
क्वात्मजाः कालिदासादयो हन्त मे
इत्यलं संस्मरन्ती चिरं मण्ठते !
देववाणी व्यथोच्छूननेत्राऽधुना
हिण्डते हन्त ! कारुण्यभृङ्गाटके !!

सर्वभाषासवित्री जगत्पावनी
यद्गतिर्जाह्नवी यद्रतिर्यामुनी ।
वाङ्मये लोलवेलाचलत्सागरं
विश्वरूपं दधाना न कैः सेव्यते !!
देववाणी व्यथोच्छूननेत्राऽधुना
हिण्डते हन्त ! कारुण्यभृङ्गाटके !!

यज्जिजीवाक्षतं यज्जिजीवामृतं
यद्यशश्चारु तेनेऽद्भुतं भारतम् ।
भास्करं तल्लसद्वैभवं वाङ्मयं
स्वर्गवोमूलकं चिन्मये भारते !!
देववाणी व्यथोच्छूननेत्राऽधुना
हिण्डते हन्त ! कारुण्यशृङ्गाटके !!
मुस्लिमैरप्यनर्थाय नो कल्पिता
सादरं साग्रहं सत्वरं जल्पिता ।
हन्त ! दाराशिकोहैः शिरस्याहिता
कैश्चिदन्धैरिदानीं कृता कण्टके !!
देववाणी व्यथोच्छूननेत्राऽधुना
हिण्डते हन्त ! कारुण्यशृङ्गाटके !!



# भवभूतिरेव महीयते !

करुणामहोदधिगाहने भवभूतिरेव महीयते !
कवितासुधासदुपायने भवभूतिरेव महीयते !!

विरहव्यथेव शरीरिणी वनमेति यस्य विदेहजा
तदमेयदैन्यविभावने भवभूतिरेव महीयते !!

ग्रावाऽपि रोदिति निर्भरं दम्भोलिहृदयं ध्वंसते
विकलार्यचरितविकाशने भवभूतिरेव महीयते !!

व्यतिषजति हेतुः कोऽप्यसौ भुवने पदार्थानान्तरः
वाचाऽनया प्रणयार्चने भवभूतिरेव महीयते !!

गुण एव पूजाकारणं गुणिनां न लिङ्गं न च वयः
ननु सद्गुणानां ख्यापने भवभूतिरेव महीयते !!

मर्माणि कृन्तन् क्रकच इव मन्युर्न विरमति योऽनिशम्
तस्यापि सौम्यसमापने भवभूतिरेव महीयते !!

दृष्टशिशखण्डकमण्डनः कुरुते दृशोरमृताञ्जनम्
तादृशशिशुत्वसभाजने भवभूतिरेव महीयते !!

गद्गदनदद्गोदावरीपयसामवाचीभूभृताम्
घननीलशिखरविभासने भवभूतिरेव महीयते !!

अशिथिलजटिलपरिरम्भणैरविदितगतप्रहरैव या
मधुरजनिमञ्जुरसायने भवभूतिरेव महीयते !!

अन्तःकरणतत्त्वप्रणयसंश्रयचये ममतामये
सन्ततिसुखोदयलासने भवभूतिरेव महीयते !!

स्नेहं दयां सौख्यं परं ननु मुञ्चतोऽवनिजामपि
रामस्य लोकाराधने भवभूतिरेव महीयते !!

अर्थोऽनुधावति सत्वरं येषाम्पुनर्वाचं सदा
तेषामृषीणामर्चने भवभूतिरेव महीयते !!

प्रथयन्त्यवज्ञां येऽनिशं तान्प्रति न यत्नं यो दधे
कविकर्मणामभिनन्दने भवभूतिरेव महीयते !!



नित्योत्थापितविश्वशान्तियतनैर्माङ्गल्यमूलैर्नवैः
नित्योद्घोषि-नराष्ट्ररक्षणपरैर्भव्यैर्विधानोच्चयैः !
पञ्चत्वागममयं हृषीकनिचयैर्युक्तं वपुर्धारयद्
मन्ये क्षेमकरे पथि प्रतिदिनं राष्ट्रं पुरोगच्छति !!

# भारतं वन्दे !!

यदभ्युदयस्तरणिबिम्बे चन्द्रमसि कीर्तिः
यस्य करुणा सिन्धुसलिले खगकुले गीतिः
सुव्रतं वन्दे !
भारतं वन्दे !!

कुसुमनिचये यस्य हासः किसलये शिशुता
संस्कृते खलु वंशगाथा प्राकृते मृदुता
सत्कृतं वन्दे !
भारतं वन्दे !!

यस्य हृदयं धर्मनिलयं दर्शनं दृष्टिः
विश्वबन्धुत्वं निसर्गश्चिन्मयी सृष्टिः
सङ्गतं वन्दे !
भारतं वन्दे !!

यस्य शीर्षे देवतात्मा हिमगिरिस्तनुते
यस्य भाले सुभगकाश्मीरं छविं कुरुते
अक्षतं वन्दे !
भारतं वन्दे !!

द्वेषविकले भूतलेऽस्मिन् यस्य ताटस्थ्यम्
दैन्यमदशातननिरासे यस्य सातत्यम्
भूभृतं वन्दे !
भारतं वन्दे !

धर्मबहुलं जातिबहुलं भारतीबहुलम्
बहुलतायामपि यदीयम् एकसूत्रबलम्
सम्मतं वन्दे !
भारतं वन्दे !!



## जयताद् भारतराष्ट्रम् !!

भव्यमतीतं भव्यतरं खलु निखिलं प्रवर्तमानम् !
भावि भविष्यति भव्यतमं ननु जयताद् भारतराष्ट्रम् !!

विलसति शिरसि तुहिनगिरिरचना धृतकैलाशविलासा
महिमानं गायति विहगाली हृतचारणपरिभाषा
चरणकुवेलमनिशमुपयातो जलधिः कलयति मानम् !
जयताद् भारतराष्ट्रम् !!

बङ्गकलिङ्गतमिलकेरलमरुभूगुर्जराभिरामा
भाति गले खलु जनपदमाला विविधनिसर्गललामा
काश्मीरं किल लसति ललाटे प्रभवति हिन्दुस्थानम् !
जयताद् भारतराष्ट्रम् !!

भूः सुवर्णपुष्पा जलममृतं जीवनदो मधुवायुः
आह्लादैकपरम् ऋतुचक्रं प्रथितं ते घृतमायुः
वृन्दारकसंहतिरपि नितरां गायति शुभगुणगानम् !
जयताद् भारतराष्ट्रम् !!

परिलक्ष्यसे तात ! परितस्त्वं पुरवनशैलशरीरम्
संस्कृतगदितं संस्कृतचरितं त्रिजगति धर्मधुरीणम्
मृण्मात्रं मनुते वैधेयः प्राज्ञो जनकसमानम् !
जयताद् भारतराष्ट्रम् !!

कुसुमैर्हससि लपसि विहगैस्त्वं दयसे प्रकृतिविलासैः
धर्मदृशा पश्यसि ननु भुवनं द्रवसि घनागममासैः
विदधन्निखिलं जनानुकूलं जीवसि विधिप्रमाणम् !
जयताद् भारतराष्ट्रम् !!



## रक्ष मदीयं देशम् !!

भगवन् रक्ष मदीयं देशम् !
भूतलरत्नं त्रिभिस्सिन्धुभिः कृतरुचिकरपरिवेषम् !!

हिमधवले शैलेयशीर्षके कुरुतेऽनिशं प्रहारम्
असमीचीनं दुर्मदचीनं तनुते मृषा प्रचारम्

निर्मनं मानसं विलोकय लोकय हंसनिवेशम् !
भगवन् रक्ष मदीयं देशम् !!

पञ्चसरित्परिवृतमपि नितरां ज्वलति पञ्चनदराज्यम्
झन्दुरायते मन्दिरमपि हा शशशृङ्गं सौराज्यम्

हन्त ! जिघांसति बन्धुरेव बन्धून् हत्वा दशमेशम् !
भगवन् रक्ष मदीयं देशम् !!

सहजमेव शैत्यं तनुते यद् विकृतं तत् काश्मीरम्
आवेष्टितविषधरविषाक्तमिव फूत्कुरुते ससमीरम्

सन्त्रस्ता वेपते वितस्ता सिन्धुः स्मरति परेशम् !
भगवन् रक्ष मदीयं देशम् !!

अधमर्णो दुर्भावविशीर्णो लालाटिको वराकः
नो समीहते भारतसौख्यं द्वेषजर्जरः पाकः

परित्यज्य लज्जामेकां ननु वाञ्छति विजयमशेषम् !
भगवन् रक्ष मदीयं देशम् !!

जगन्नाथ ! जागृहि परमेश्वर ! नायं निद्राकालः
ताम्यति विबुधरत्नगर्भेयं घूर्णति कालव्यालः

स्वाधीनता भवेन्न खण्डिता चिन्तय कमपि विशेषम् !
भगवन् रक्ष मदीयं देशम् !!



# कीदृशी स्वतन्त्रता ?

निर्दयं विरौम्यहं कोऽपि नो शृणोति मे
मामके हि भारते कीदृशी स्वतन्त्रता ?

शोकतापजर्जरा द्रोहभारभङ्गुरा
अद्य दृश्यते न किं भारतीवसुन्धरा

दुर्गते हि भारते कीदृशी स्वतन्त्रता ?
मामके हि भारते कीदृशी स्वतन्त्रता ??

लज्जयाऽऽनतं शिरो हन्त देवतात्मनाम्
वेदनाऽऽहतम्मनो नाकिनां हुतात्मनाम्

चिन्तयन्ति तेऽनिशं भावयन्ति विस्मिताः
मामके हि भारते कीदृशी स्वतन्त्रता ??

गन्धपुष्पवल्लरीभृङ्गगीतिमार्दवम्
विद्यतेऽधिवाटिकं किन्न भूरिवैभवम्

प्रोत्थिते दवानले कुत्र काकलीकथा ?
मामके हि भारते कीदृशी स्वतन्त्रता ??

शष्पवीथिकाऽऽयता स्वादु निर्झरीजलम्
लोलकेलयेऽवनी चारु शर्वरीगृहम्

व्याघ्रधर्षिते वने किन्तु नैव बन्धुता !
मामके हि भारते कीदृशी स्वतन्त्रता ??

पूतजाह्नवीजलं कैर्हलाहली कृतम्
कैश्च सप्तसैन्धवं रक्तरञ्जितं कृतम्

भेदभावदृष्टिभिर्दीर्यते समग्रता !
मामके हि भारते कीदृशी स्वतन्त्रता ??

यत्तटस्थभावना भूतलेऽभिनन्द्यते
विश्वशान्तिकामना सौमनस्यमश्नुते

प्राज्यवैभवस्य तत् कीदृशी विपन्नता ?
मामके हि भारते कीदृशी स्वतन्त्रता ??

अद्य कम्पते रुषा सम्भ्रमेण धूर्जटी
रक्ष-रक्ष भारतं वक्ति भैरवी नटी

येन नो खलीभवेत्सौम्यभारतीयता !
मामके हि भारते कीदृशी स्वतन्त्रता ??

एत भारतीसुता ब्रूत कण्ठसङ्गताः
नो वयं पृथक्श्रिता नो वयं पृथङ्मताः

हिन्दुसिक्खमुस्लिमैरस्मिता विनिर्मिता !
मामकेऽद्य भारते राजते स्वतन्त्रता !!



## रक्तरञ्जितं दृश्यतेऽद्य भारतम् !!

द्वेषदैन्यधर्षितं शोकतापतर्जितम्
हन्त रक्तरञ्जितं दृश्यतेऽद्य भारतम् !!

बाधते शिरोऽनिशं काऽपि शीर्षवेदना
प्रातिवेशिकैर्न कैः कल्प्यते कदर्थना

हा विधे ! कुटुम्बिनामेव नैव सम्मतम् !
हन्त रक्तरञ्जितं दृश्यतेऽद्य भारतम् !!

दह्यते दवाग्निना स्फीतपुष्पवाटिका
भज्यते विलुण्ठकैः प्रतिशालभञ्जिका

पूतजाह्नवीजलं कैर्हलाहलीकृतम् !
हन्त रक्तरञ्जितं दृश्यतेऽद्य भारतम् !!

स्वर्गतौ विषीदतो भक्तचन्द्रशेखरौ
सौख्यमञ्चतो मनाङ् नेन्दिराजवाहरौ

पूज्यगान्धिनोऽपि हृद् भूरियातनाऽऽहतम् !
हन्त रक्तरञ्जितं दृश्यतेऽद्य भारतम् !!

यत्सरस्वतीतटे जातु घोषिता त्रयी
सप्तसिन्धुशोभिता यद्धरा हिरण्मयी

सैव राष्ट्रसङ्कटं सञ्चिनोति साम्प्रतम् !
हन्त रक्तरञ्जितं दृश्यतेऽद्य भारतम् !!

जातिपंक्तिभावनां नानको न मन्यते
ग्रन्थसाहिबेऽर्जुनः सर्वसौख्यमश्नुते

सिक्खसम्प्रदायिभिर्मङ्गलं न वारितम् !
हन्त रक्तरञ्जितं दृश्यतेऽद्य भारतम् !!

शौर्यविक्रमाङ्गणे क्लैव्यनर्तनं न किम्
वेष्टितं भुजङ्गमैश्चारु चन्दनं न किम्

छागमेषसन्निभं यत्र शीर्षकर्तनम् !
हन्त रक्तरञ्जितं दृश्यतेऽद्य भारतम् !!

हन्यते चमूपतिश्चापि यद्यरक्षितम्
तर्हि कस्य जीवनं वर्तते सुरक्षितम्

मृत्युभीषिका जनान् क्लेशयत्यनारतम् !
हन्त रक्तरञ्जितं दृश्यतेऽद्य भारतम् !!

सिन्धुरन्धताङ्गतः शातिता शतद्रुका
सव्यथा विपाशिका विद्रुता वितस्तिका

स्तम्भिता त्विरावतीस्मारयन्त्यतीतकम्!
हन्त रक्तरञ्जितं दृश्यतेऽद्य भारतम् !!

एत सौम्यबान्धवा बन्धुता विधीयताम्
क्षेत्रवर्गभावना सत्वरं निवार्यताम्

प्राञ्जलं पुनर्भवेद् येन भव्यभारतम् !
विश्वपूजितं भवेन्मामकीनभारतम् !!



# निर्झरी हन्त कूलङ्कषा !

जायते निर्झरी हन्त कूलङ्कषा !
एधते साम्प्रतं भारते दुर्दशा !!

पातिताश्चण्डवेगैः रसालद्रुमाः
ह्लादिनी कोकिलाऽभूद् भृशं नीरसा !!

या कृपाणी गृहीता क्वचिद्रक्षणे
हन्ति सैवात्मबन्धून् निकामं रुषा !!

नेत्रनीरं वहन्तीव देवापगा
ईक्षते भारतीयान् रुदत्या दृशा !!

या कदाचिद् विपत्तेरभूत्कारणम्
सैव हिंसाऽद्य जाता कथं ते स्वसा ??

सोदरौ हिन्दुसिक्खाविति ज्ञायताम्
खण्ड्यतां नैव राष्ट्रं श्रितेनांहसा !!

क्वाऽर्थभट्टादिविक्षेपजन्यं यशः
क्वान्तरद्रोहदैन्यं पृथक्त्वं मृषा ??

आप्नुयाद्धन्त राष्ट्रं कथं गौरवम्
यत्सुता एव नाशे रता रंहसा !!

माघ एवाब्रवीत् किं वयं ब्रूमहे
भारते राजनीतिः कियत्पस्पशा !!

काननं तद्धि रक्षेत्स्वयं श्रीपतिः
शासका यत्र कण्ठीरवाणां शशाः !!

ध्वंसते शुष्ककण्ठः शुकः पञ्जरे
चिन्वते पितृपक्षे बलिं वायसाः !!



पादावहि्न प्रयातो गिरिविपिनसरित्सिन्धुतीरप्रदेशे
कुर्वाते कार्यंजातं श्रितरुच्चिककरौ लोचने सुप्तबुद्धे ।
बाल्यां सर्वेन्द्रियाणि स्वविषयपरिधौ दत्तचित्तानि किन्तु
चित्तं तन्मेऽसहायं भ्रमति निजगृहे भारतस्थे निकामम् ॥

## जलधर ! नय सन्देशम् !!

जलधर ! नय सन्देशम् !
मत्प्रियभारतदेशम् !!

प्रथमं गच्छोत्तरप्रदेशान् यत्र तीर्थपतिनगरी
गङ्गायमुनासङ्गमरुचिरा भुक्तिमुक्तिगतिलहरी

पश्य मदीयनिवेशम् !
जलधर ! नय सन्देशम् !!

सान्त्वय जरातुरां जननीं मम स्नेहमयीमधिराजीम्
पुत्रप्रणयविमोहकातरामश्रुमयीं पलिताङ्गीम्

बन्धुसमूहमशेषम् !
जलधर ! नय सन्देशम् !!

तदनु गच्छ मदनान्तकनगरीं कर्णपुरं भोपालम्
भारतराष्ट्रराजधानीमथ दिल्लीं ततोऽनरालम्

श्रावय कुशलविशेषम् !
जलधर ! नय सन्देशम् !!

महाकालनगरीमुज्जयिनीं श्रीनिवासपदधन्याम्
गच्छ ततस्सागरं वल्लभं तिरुचीं ततो वदान्याम्

वेदय विगतक्लेशम् !
जलधर ! नय सन्देशम् !!

प्रतिजनपदं प्रतिपुरं बन्धो ! राष्ट्रे सन्ति सखायः
सर्वत्रापि मदर्थसमुत्कण्ठितपरिजनसमुदायः

ब्रूहि शुभं परिवेशम् !
जलधर ! नय सन्देशम् !!



## स्मृतिमञ्चति स्वदेशः !!

एकान्तो बाधते निकामं स्मृतिमञ्चति स्वदेशः !
प्रोषितमिह मामभिनवयक्षं सन्धारयतु परेशः !!

वर्षति सजलजलधरोऽविरतम्
चण्डं क्वचित्क्वचित्खलु निभृतम्

रमयति मनो जलदसङ्गीतं भाति निखिलपरिवेशः !
सन्धारयतु परेशः !!

नारिकेलकदलीविराजिता
पदे-पदे सहकारराजिता

वाटिकेव नगरीयं रुचिरा सौधायते निवेशः !
सन्धारयतु परेशः !!

बालीद्वीपराजधानीयम्
डेन्पसारनाम्नी धात्रीयम्

निखिलसौख्यसन्दोहमण्डिता तदपि वर्धते क्लेशः !
सन्धारयतु परेशः !!

स्मारं स्मारं भारतदेशम्
हिमगिरिगङ्गाविन्ध्यनिवेशम्

सुजलं सुफलं मलयजभरितं याति संयमोऽशेषः !
सन्धारयतु परेशः !!

यामुनगाङ्गतरङ्गविलासी
अभिराजः साम्प्रतं प्रवासी

प्रणमति सुहृत्स्वजनसमुदायं सदयं सविनयमेषः !
सन्धारयतु परेशः !!



## महीसीयं भारतभूमिः !!

महीयसीयं भारतभूमिर्यत्र वयं सञ्जाताः !

यत्र जना बिभ्यति दुरितेभ्यः
पापवञ्चनाछलनिवहेभ्यः

गृहे-गृहे पूज्यते परेशः कश्चिज्जगद्विधाता !
यत्र वयं सञ्जाताः !!

कोऽपि वर्तते शिवाऽनुरागी
कोऽपि वैष्णवो गणपतिरागी

शक्तिं ध्यायति कोऽपि पराम्बां तद्गुणचयानुगाता !
यत्र वयं सञ्जाताः !!

यद्यपि निखिलं विपरिर्वातितम्
त्रेताद्वापरकृतयुगचरितम्

कलौ तथापि केचिदवशिष्टाः प्राक्तनगुणसंघाताः !
यत्र वयं सञ्जाताः !!

श्रयति भारतं यावद् वाणी
देवचरितमहिता कल्याणी

तावद्देशोऽयं भुवि भविता विश्वबन्धुतात्राता !
यत्र वयं सञ्जाताः !!

विन्ध्यमलयहिमवत्प्राचीरः
श्रितगङ्गाकावेरीनीरः

प्रतिपदतीर्थभूतशुभकायो देशोऽयं सुखदाता !
यत्र वयं सञ्जाताः !!



# भारतं कीदृशं वर्तते ?

राष्ट्रचिन्तातुरस्मै मनश्शङ्कुले !
भारतं हे प्रभो ! कीदृशं वर्तते ??

पञ्चनद्ये प्रदेशे खलैर्ज्वालितः
द्रोहरोषानलः किन्तु निर्वापितः

प्रत्यहं मृत्युतल्पं जनाः शेरते !
भारतं हे प्रभो ! कीदृशं वर्तते ??

सुस्थिरा वा न वा राजनीतेर्गतिः
आश्रयेत्पार्श्वकं कं क्रमेलस्थितिः

सांसदा अद्भुतं नाट्यमातन्वते !
भारतं हे प्रभो ! कीदृशं वर्तते ??

शान्तिमेता न वा गोरखायाचना
स्वार्थसम्मोहिताऽनैतिकी वञ्चना

सर्व एव प्रहर्तुं मतिं कुर्वते !
भारतस्मै प्रभो ! कीदृशं वर्तते ??

गन्धवाहो वहेन्मन्दमन्दं सदा
वर्धयन्तां धरित्रीं जलैर्नीरदाः

कल्पयित्वेति गाढं सुखं जायते !
भारतस्मै प्रभो ! कीदृशं वर्तते ??

राजतां संस्कृतश्रीरियं कामना
सन्ततं बालिभूमिस्थितस्यार्थना

हन्त ! राजेन्द्रमिश्रस्य विद्योतते !
भारतस्मै प्रभो ! कीदृशं वर्तते ??



## क्वासि गुरो गोविन्द !!

क्वासि गुरो गोविन्द ! हा हतम् !
तव शिष्यैः पीड्यते भारतम् !!

आसीस्त्वं सद्धर्मत्राता
तुभ्यं ददौ सुतं स्वं माता

त्वया शौर्यमभयाय सञ्चितम् !
तव शिष्यैः पीड्यते भारतम् !!

नासीत्तदा किमपि पार्थक्यम्
हिन्दुसिक्खयोः परं सतैक्यम्

उभयोरेव समानलक्षितम् !
तव शिष्यैः पीड्यते भारतम् !!

एकस्यैव पितुर्द्वौ जातौ
हिन्दुसिक्खभूतौ समगात्रौ

द्वयोरेव समरूपचिन्तितम् !
तव शिष्यैः पीड्यते भारतम् !!

त्वया व्यरचि दशमेश ! विनीतम्
रामकृष्णदुर्गाशिवगीतम्

ग्रन्थसाहिबेऽद्यापि सञ्चितम् !
तव शिष्यैः पीड्यते भारतम् !!

हिन्दुधर्मरक्षणेऽवसक्तैः
सिंहवाहिनीसद्गुरुभक्तैः

शिष्यैः कथमन्यथा वर्तितम् ?
तव शिष्यैः पीड्यते भारतम् !!

गाङ्गे जले केन विषबिन्दुः
सम्मेलितो हन्ति निजबन्धुः
चित्रं निर्मात्रैवं खण्डितम् !
तव शिष्यैः पीड्यते भारतम् !!

प्रविश हृत्सु ननु शिष्यजनानाम्
वन्द्यगुरो ! दशमेश ! खलानाम्
खलस्थानमिह यैः प्रयाचितम् !
तव शिष्यैः पीड्यते भारतम् !!



## बाल्यां निखिलं भारतायते !



बाल्यां निखिलं भारतायते !

कलममञ्जरीपिञ्जरवर्णा
भाति धरा हरितद्रुमपर्णा !
नारिकेलकदलीकदम्बकैः
तमिलधरासुषमा स्फुटायते !
बाल्यां निखिलं भारतायते !!

प्रतिगृहाङ्गणं पनसरसालाः
पाटलजपाप्रभृतिसुमभालाः ।
पथि-पथि शम्भुसपर्याचैत्यं
तन्नास्त्येव न यच्छिवायते !
बाल्यां निखिलं भारतायते !!

स्वस्त्यस्त्विति विद्यालयसंज्ञा
तत्त्वमसीति निवासाभिज्ञा ।
श्रुतिऋचादिबालिकाभिधानम्
अस्त्रमन्त्रयुज्जनो जायते !
बाल्यां निखिलं भारतायते !!

उदयनयुनिवर्सिटी महार्घ्या
नन्वपरा महेन्द्रदत्ताख्या ।
महासरस्वतिका च तृतीया
सुरवाणी परितश्शिखायते !
बाल्यां निखिलं भारतायते !!

संस्कृतबहुला बालीभाषा
भारताऽनुगाऽखिलपरिभाषा ।
भवनद्वारि विभाति गणेशो

गरुडस्थोऽपि हरिर्ध्वजायते !
बाल्यां निखिलं भारतायते !!

परितः समुच्छलति ननु सिन्धुः
बालिजनानां प्राक्तनबन्धुः ।
समशीतोष्ण आर्द्रजलवायुः

ऋतुचक्रं नितरां हितायते !
बाल्यां निखिलं भारतायते !!



रक्तस्नातैः पलाशैर्गिरिशिखरपतद्वारिचञ्चत्प्रपातै-
र्युद्धोन्मत्तैरिवाभ्रैर्जलधरसमये संस्फुरच्चन्द्रिकाभिः ।
शस्यक्षेत्रैः समृद्धैः शिखिनटनलसन्निम्नगोपान्तदेशैः
रूपैश्चित्रैर्विचित्रैर्मदयति हृदयं भारतीयो निसर्गः !!

# मेघो वितरति बहु-बहु वारि !

मेघो वितरति बहु-बहु वारि
भुवनसुखमातनुते !!

भाति धरणी विशाला
धृतशाकतृणमाला

मेघो वितरति बहु-बहु वारि
नयनसुखमातनुते !!

शाखा विमलपलाशा
मञ्जुकलरवहासा

मेघो वितरति बहु-बहु वारि
विहगसुखमातनुते !!

प्रिया चपला पयोदम्
समालिङ्गति समोदम्

मेघो वितरति बहु-बहु वारि
मदनसुखमातनुते !!

वाटी विकचकदम्बा
स्फीतसुमनिकुरम्बा

मेघो वितरति बहु-बहु वारि
प्रकृतिसुखमातनुते !!

कल्पनायितेव राका
व्योम्नि दृश्यते बलाका

मेघो वितरति बहु-बहु वारि
हृदयसुखमातनुते !!

क्षेत्रं शस्यहरिताभम्
ज्ञातमाविधान्यलाभम्

मेघो वितरति बहु-बहु वारि
कृषकसुखमातनुते !!

क्वचिच्चण्डं क्वचित्तारम्
क्वचिन्मन्द्रं बिन्दुसारम्

मेघो वितरति बहु-बहु वारि
कवनसुखमातनुते !!



## वसन्तो भुवमवतरति सुखाय !

मदयति हृदयम्
सुखयति सदयम्
श्रियमुद्गिरति वनाय !
वसन्तो भुवमवतरति सुखाय !!

दिशि दिशि पीता मधुकरगीता
लसति रसालवनाली !
'कुहू-कुहू' कूजति परभृतिका
दयितं रहसि निधाय !
वसन्तो भुवमवतरति सुखाय !!

कपिशं कपिशं किरति पलाशं
मनसिजरुधिरपिपासाम् !
आतङ्कः प्रभवति खलु विपिने
पथि पथि पथिकजनाय !
वसन्तो भुवमवतरति सुखाय !!

उदयति मिहिरे विहसति गगनं
धृतकुङ्कुमपटवासम् !
चर्चरिकां नृत्यन्ति युवतयो
होलोत्सवरचनाय !
वसन्तो भुवमवतरति सुखाय !!

प्रकृतिरुदारा वितरति गन्धं
सहजतया निर्मूल्यम् !
पत्राक्षतान् प्रवर्षति विटपी
धरावधूवरणाय !
वसन्तो भुवमवतरति सुखाय !!

नोग्रं तपति दिने दिनमाली
विदहति न वा निदाघः!
आश्च्योतनं सृजति विधुवामा
ज्योत्स्ना रसिकजनाय!
वसन्तो भुवमवतरति सुखाय!!

स्यन्दति निशि निशि विकचमधूकात
रतिरस इवाविरामम्।
कुटिलनयनगतिरेव विजयते
क्षमते चाप्यभयाय!
वसन्तो भुवमवतरति सुखाय!!



# दीपकमाला

हरति तमो ननु दीपकमाला !
संस्मारयति पुरातनवृत्तं दीपितभवनविशाला !!
प्रतिमार्गं प्रतिचत्वरमधुना विलसति दीधितिलोकः
हसति गृहाङ्गणमञ्चितसौख्यं नश्यति हृदयजशोकः
सर्वत्रैव विभा सन्तनुते समनुभूतमधुशाला !
हरति तमो ननु दीपकमाला !!

दीपप्रभा विभाति पावनी सन्दधती छविपूरम्
ग्रामवधूसीमन्तलतायां लसति यथा सिन्दूरम्
कमलालया विशति प्रतिगेहं सौभाग्याङ्कितमाला !
हरति तमो ननु दीपकमाला !!

दीप्तिपर्व कलुषापनोदनं दुरितमलक्षयपूतम्
भवतु समेषां कृते निकामं मङ्गलमयमाहूतम्
हृदये हृदये प्रवहतु तटिनी प्रणयपयोधिविशाला !
हरति तमो ननु दीपकमाला !!



# गङ्गा विलसति !

गिरिशिखरादवतरति सवेगं क्षीरधवलजलधारा
पतति शिलायां पुनरुत्तिष्ठति फेननिचयसम्भारा
गङ्गा विलसति भुवि शरणाय
नयनसुखमातनुते !!

भागीरथी सरति गोमुखतो बदरीतोऽलकनन्दा
मन्दाकिनी मिलति पथि मध्ये चञ्चलसलिलतरङ्गा
गङ्गा विलसति भुवि शरणाय
धरणिसुखमातनुते !!

हरिद्वारमागता जाह्नवी संश्रितसमतलदेशा
समुच्छलति धावति कूर्दति वा दर्शितयुवतिसुवेषा
गङ्गा विलसति भुवि शरणाय
हृदयसुखमातनुते !!

क्वचित्कनखलं ब्रह्मावर्तः क्वचिन्मोक्षदा काशी
पदे-पदे गङ्गायाः पुलिने रमते शिवोऽविनाशी
गङ्गा विलसति भुवि शरणाय
प्रणतिसुखमातनुते !!

तीर्थपतौ भगिनीमालिङ्गति कृष्णमयीं रविकन्याम्
श्वेतनीलजलसङ्गमसुषमा दृष्टिं कलयति धन्याम
गङ्गा विलसति भुवि शरणाय
मिलनसुखमातनुते !!

वृद्धो जडो निर्धनो बधिरो भोगी वा संन्यासी
स्नाने गायति 'हर हर गङ्गे' भक्तोऽथवा विलासी
गङ्गा विलसति भुवि शरणाय
शमनसुखमातनुते !!

नारायणपदपङ्कजमाध्वी ब्रह्मकमण्डलुजाता
शोकमोहकल्मषतप्तानां स्नेहमयी सा माता
गङ्गा विलसति भुवि शरणाय
जननसुखमातनुते !!



# कावेरी

संस्मारयति सुखं कावेरी !
चञ्चलशुभ्रजला हिमतरला
कविजनमहिता विधुकरधवला
तुलयति जह्नुसुतां कावेरी !!
दक्षिणदिशि विलसत्यभिरामा
त्रिशिरःपुरी[1] ललामललामा
गिरिमपि मन्दिरयति[2] कावेरी !!
सप्तावरणरक्षितं भवनम्
श्रीरङ्गे वृतगोपुरचयनम्
शेषशयं सुखयति कावेरी !!
प्राच्यां जम्बुकेश्वरो देवः
कृताऽखिलाण्डेश्वरीसुसेवः
जललिङ्गं प्रथयति कावेरी !!
श्रीरङ्गं खलु दर्शं दर्शम्
हृदयम्मे तनुते नवहर्षम्
चुलुकममृतयति किल कावेरी !!
ते यात्रादिवसा[3] मम जीर्णाः
संस्मृतयो न तथापि विशीर्णाः
दाक्षिण्यं द्रढयति कावेरी !!
मीनाक्षीं बृहदीश्वरपादम्
चिदम्बरं सुखमयसंवादम्
अनुभावयति झटिति कावेरी !
संस्मारयति सुखं कावेरी !!



---

१. तिरुचिरापल्लीति ।
२. *Rock Temple* इति ख्यातं शिलामन्दिरम् ।
३. १९८६ मितख्रिस्ताब्दे जनवरीमासे सप्ताहं यावत् ।

## पुरुरूप सागर !!

पुरुरूप सागर ! तावकं दृष्टम्मयाऽखिलवैभवम् !
जलभूप सागर ! तावकं दृष्टम्मयाऽखिलवैभवम् !!

उत्तुङ्गफेनजलाऽकुलः कस्मै वृथा कुप्यसि विभो !
अयि रुद्ररूप पयोनिधे ! ननु लक्ष्यसे भुवि भैरवम् !!

अथवा धुनोसि शिरस्सखे ! भारतधरापदपङ्कजे
अयि वत्सरूप सरित्पते ! ननु रोचते तव शैशवम् !!

तव लोललहरिकराञ्चितः प्राचीसमीर इहागतः
विदधाति पावनपावनं कायं विभावितमार्दवम् !!

गङ्गाञ्चले[1] निवसाम्यहं गङ्गापतिस्त्वमपि ध्रुवम्
तनुजस्तवेत्थमहं पितः कुरु मां कदर्थितकैतवम् !!

तव गर्जितं श्रुतिशष्कुलीं सङ्गीतकेन हृतात्मना
सम्पूरयत्प्रपुनात्यहो सिन्धो ! महत्तव गौरवम्[2] !!



१. प्रयागनगर इत्याशयः

२. अरविन्दाश्रमपरिसरस्थे सागरतटे समास्थाय लिखितं गीतम् ।
( २७ दिसम्बर ८५, पाण्डीचेरी )

## दक्षिणाशाऽवनी शोभते !

भारते दक्षिणाशाऽवनी शोभते !
मालभूमिश्रितैश्चारुमोचाक्षुपैः
कीर्तिविस्तारकैरद्रिसानुध्वजैः
मन्दशीतानिलैर्गत्वरैः शोभते !!
व्योमलग्नोत्तमाङ्गैः स्फुरन्निःस्वनैः
मञ्जुशोभावहैस्तालतालीवनैः
दृष्टिमारञ्जयद्भिर्भृशं शोभते !!
तामिलीयं धरा यत्र कावेरिका
कैरलीयं धरा सिन्धुवेलाऽऽवृता
शोभनैर्नारिकेलीगृहैः शोभते !!
सेयमान्ध्रावनी याऽस्ति कृष्णान्विता
आन्ध्रभूपालसौराज्यसंस्मारिका
वेङ्कटेशालयारोहणैः शोभते !!
रम्यकर्णाटभूमिर्नृपालोज्ज्वला
पाण्ड्यवंशश्रिया मण्डिता सत्कला
मञ्जुचारित्र्यगाथाधनैः शोभते !!
वन्द्यदाक्षिण्यमत्रैव सन्दृश्यते
संस्कृतिर्भारतीयाऽत्र मोमुद्यते
रक्षितैर्देववाणीश्रमैः शोभते !!
भूधरम्मालयं नौमि सिद्धायनम्
यत्र शाखोटनिम्बादिकं चन्दनम्
मञ्जुवातोऽपि संसर्गजः शोभते !!



## शिलादुर्गमन्दिरम् !

हरति मनो मे शिलादुर्गमन्दिरं विशालम् !!

संघटितं शतशतसोपानैः:
सम्भूषितं गवाक्षवितानैः
नतोन्नतं समरेखं तिर्यक् क्वचिदनरालम् !
हरति मनो मे शिलादुर्गमन्दिरं विशालम् !!

अमरावतीविहरणप्रीतिः
शिखरे स्थिते जायते स्फोतिः
प्राच्यामुदयन् रविर्लक्ष्यते बृहत्प्रवालम् !
हरति मनो मे शिलादुर्गमन्दिरं विशालम् !!

प्रवहति कावेरी शुभसलिला
सविधावेव तरङ्गणतरला
अनुतटतालविटपिवनशोभा श्रयति तमालम् !
हरति मनो मे शिलादुर्गमन्दिरं विशालम् !!

आकाशादिह दृष्टा धरणी
किन्नरपुरीव मानसरमणी
त्रिशिरःपुरं विभाति समुच्छ्रितगोपुरमालम् !
हरति मनो मे शिलादुर्गमन्दिरं विशालम् !!

पारेकावेरिकं शुभाङ्गम्
विलसति पूततमं श्रीरङ्गम्
सप्तावरणभूषितं भवनं हरेर्विशालम् !
हरति मनो मे शिलादुर्गमन्दिरं विशालम् !!

गिरिशिखरेऽत्र राजते सरलम्
उमामहेश्वरवन्दितयुगलम्
केषामिह पूर्यंते न काम्यं समर्च्य कालम् !
हरति मनो मे शिलादुर्गमन्दिरं विशालम् !!



## मिहिरावलिः

वारं वारं त्वमसि लोकिता
भग्नपञ्जरा भुग्नकन्धरा
क्षतविक्षतविग्रहा दुर्ग्रहा
श्रीहतनेत्राभ्यां
मिहिरावलि !!

त्वत्प्राङ्गणे न कलकलनादो जलसरणीनां
यावकरसरञ्जितचरणानां नैव मुखरता
क्षुद्रघण्टिकामण्डितनूपुरसंवलितानां
गतागतं नो
चारणवन्दिद्विजनिवहानाम् !
त्वमसि खण्डिता
प्रोषितपतिका
मिहिरावलिके !

किन्तु निर्दिशति ते सौभाग्यं
विष्णुध्वजः स्थाणुरिव सुदृढः
प्रत्यक्षीकृतशतसहस्रघनमासनिदाघः
चन्द्रनृपतिकीर्तिश्रीसाक्षी !

लक्षमिता दर्शका विरूपां त्वां सन्द्रष्टुं
समायान्ति देशतो विदेशात्
सुभगम्मन्याः
बण्डभण्डपामरा युवानो
बाला वृद्धाः
मधुयामिनीनिमज्जितहृदया दयिताभक्ताः
चारं-चारं भ्रामं-भ्रामं भुग्नभित्तिषु
नयनासेचनकं कलयन्तः

ननु ताम्बूलपत्रगण्डूषैराविलयन्तः
गृहं निवर्तन्ते निशामुखे
ज्ञाता किन्तु केन तव पीडा ?
अयि मिहिरावलि !!
शतशतशूलवेदनास्पन्दै—
श्छिन्ना-भिन्ना
नतोन्नतं स्वातीतजीवनं
वितते तिह्यं
सम्प्रति गणयन्ती त्वं पथिकै—
र्मुदा दृश्यसे
दिल्लीनगरपरिसरे लोकः पश्यति भवतीं
निखिलां दिल्लीं त्वयि निभालये
किन्त्वहमेकः !!

अभिशप्ते !
अयि गौतमगेहिनि !
अयि पाषाणि !
तपो वर्धतां ते निरन्तरम्
कालो ह्ययं निरवधिर्विपुला
पृथिवी चेयं
समागमिष्यति शीघ्रमेव कश्चित् करुणार्द्रः
रघुनन्दनस्सुधासंस्पर्शः
स्पृष्टा तेन पुनर्लब्धा त्वं
निजसौभाग्यम्
निजसौराज्यम् !!



केचिज्जीवन्ति भुक्त्यै विकसितरतये भोगमाध्वीजदृप्त्यै
अर्थानर्थैः परीता धनविभवसरित्स्नानतृप्त्यै च केचित् ।
स्वप्नानां संसृतिं तां निरवधिकरुणां मोहभङ्गोपजातां
प्राणेष्वाधाय नित्यं परमिह नियतिं संविधत्तेऽभिराजः !!

# विलसति गौरी !!

रुचिरपदा विलसति गौरी शिवसदने !
मुदितहृदा विलसति गौरी शिवसदने !!

शिरसि निधाय दुकूलावरणम्
श्लथचरणैः प्रचलति गौरी शिवसदने !!

सजलजलदसमकुन्तलकेशे
सिन्दूराणि वहति गौरी शिवसदने !!

ताम्बूलं कलकज्जललेखाम्
मुखनयनेषु हरति गौरी शिवसदने !!

हृदि सत्यं शिवमम्बकयुगले
सौन्दर्यं कलयति गौरी शिवसदने !!

दयितनिलयनवपरिचयभीता
चकितमृगीव सरति गौरी शिवसदने !!

प्रेतपिशाचपरीतपुरारिम्
ईश्वरपदं नयति गौरी शिवसदने !!

अभ्युदयेषु दुरितशमनार्थम्
विघ्नहरं जनयति गौरी शिवसदने !!

दाम्पत्यप्रसरं ख्यापयितुम्
देहार्धं विभजति गौरी शिवसदने !!



## मञ्जुरूपे त्वदीये !!

समग्रैव सृष्टिः पृथग् वर्तमाना
स्थिरा दृश्यते मञ्जुरूपे त्वदीये !!

क्व सा कृष्णता व्योमकादम्बिनीनाम्
समालोकिता कुन्तले या त्वदीये !!

न तद् वर्तुलत्वं न शैतल्यमिन्दोः
यदालोकितं पङ्कजास्ये त्वदीये !!

निरुद्धोऽम्बुधिस्त्वल्लसन्नेत्रयुग्मे
शिला काञ्चनी भाति भाले त्वदीये !!

यथा दामिनी भाति मध्येपयोदम्
तथा मूर्ध्नि सीमन्तरागस्त्वदीये !!

तव व्याहृतौ कूजनं कोकिलानाम्
मृदुत्वं लतायाः शरीरे त्वदीये !!

तव स्पर्शलेशेऽपि पाटीरचर्चा
उशीरानुलेपोऽङ्गसङ्गे त्वदीये !!

न किं सौमनस्यं त्वदीयानुरागे ?
न किं वैभवं प्रीतिदाने त्वदीये ??



## पदं पदं भूरि धृतम् !!

पदं पदं भूरि धृतं तीर्थमहो जायते !
जलं जलं बिन्दुधृतं हन्त सागरायते !!

मनो मनो रागयुतं चन्दनानुलेपनम्
चितं चितं यत्नधृतं कल्पपादपायते !!

श्रुतं श्रुतं बुद्धिधृतं नाशयत्यमङ्गलम्
कृतं कृतं बन्धुधिया भृशं जीवनायते !!

ततं ततं वचोवृतं काव्यमयं सर्जनम्
नुतं नुतं वन्द्यपदं साधु वन्दनायते !!

गतं गतं पथश्रितं चरैवेति मन्त्रणम्
क्षतं क्षतं सरित्तटं मञ्जु तरङ्गायते !!

वनं वनं पर्णनवं भूषयेद् वसन्तकम्
सितं सितं निशामुखं चारुचन्द्रिकायते !!

रुतं रुतं पिकोद्गतं गीतमधुरमूर्च्छनम्
हुतं हुतं मन्त्रपदैः स्वर्गवीथिकायते !!



## प्रथिता सुवर्णता मे !!

दग्ध्वा विपत्तिदहने प्रथिता सुवर्णता मे
दत्वाऽखिलं जनेभ्यो लुप्ताऽधमर्णता मे !!

कामं कुबेरगेहे प्राप्तं मया न जननम्
नयनाम्बुमुक्तयैव ध्वस्ता दरिद्रता मे !!

न सुमं न पर्णजालं न हरीतिमा वसन्ते
राधामुकुन्दकृपया धन्या करीरता मे !!

सुप्तं भुजङ्गनिवहे पीतञ्च कालकूटम्
नितरां श्मसानवासैर्महितैव शम्भुता मे !!

गङ्गा क्वचित्कृपायां यमुना क्वचिच्च रागे
विविधाभिरापगाभिर्जनिता हिमाद्रिता मे !!

क्षपितं वयोऽपरेषामभिहितवचोऽन्वयेन
परमन्विताभिधानैर्विशदा समग्रता मे !!

प्रथमोऽस्म्यहं बहूनां मध्ये च कतिपयेषाम्
पदसेवनैः समेषां सिद्धाऽभिराजता मे !!

प्रत्यङ्गमेव दोषा न लवोऽपि सद्गुणानाम्
सोढा तथापि कवितारसिकैरभद्रता मे !!

गायत्यहोऽभिराजो गीतानि वेणुकल्पः
कर्णम्पूर्णैर्निनादैर्धन्यैव छिद्रता मे !!



## युगं वर्तमानं प्रणम्यम् !!

न जननी प्रणम्या न जनकः प्रणम्यः
युगं वर्तमानं प्रणम्यं प्रणम्यम् !!

विषम्मानसे वाचि पीयूषधारा
जनं नौमि मायाविनं धन्यधन्यम् !!

स्फुटा दीनभृत्यानने स्वामिवाणी
ततो वक्ति काकं सदा हंसरम्यम् !!

मुधा हन्त सज्जेत शाकुन्तले कः ?
कविं कालिदासं न मत्वाऽऽशुगम्यम् !!

वृथा बुद्धिवैशारदो साहसं धिक्
विधेयं कथञ्चिद् हिरण्यं हिरण्यम् !!

समालोक्य लोकं विचित्रस्वरूपम्
प्रवृत्तोऽभिराजः शरण्यं शरण्यम् !!



## क्वचिन्नास्ति सौख्यम् !!

अवाप्तौ न सौख्यं समाप्तौ न सौख्यम् !
जनानामिदानीं क्वचिन्नास्ति सौख्यम् !!

करालं विषं वाचि दृष्ट्वा जनानाम्
मनागप्यहो पन्नगानां न सौख्यम् !!

युगं कीदृशं राजतेऽद्य प्रतीपम्
खलानां महिम्ना बुधानां न सौख्यम् !!

गतो दुर्दशामद्य विद्याविलासः
श्रमोपक्रमे पण्डितानां न सौख्यम् !!

जगन्मोहयत्यञ्जसा राजनीतिः
पृथग्जीविनां सज्जनानां न सौख्यम् !!

द्रुतं साम गायन्ति वर्षासु भेकाः
स्थले तादृशे कोकिलानां न सौख्यम् !!

गृहे चत्वरे ग्रामके वा पुरे वा
जडव्याकुले संस्कृतानां न सौख्यम् !!

कुरुक्षेत्रतां याति भाषाविवादे
दिवि स्थायिनां पूर्वजानां न सौख्यम् !!

यदारभ्य चेतो निलीनं मुकुन्दे
तदारभ्य दीनेन्द्रियाणां न सौख्यम् !!

प्रतिष्ठामिते दिव्यदूर्वाप्रसारे
क्षणायापि देवद्रुमाणां न सौख्यम् !!

सभायां समुत्कण्ठमानेऽभिराजे
कवित्वग्रहां नीरसानां न सौख्यम् !!





## सहसा प्रयातम् !!

सुप्त्वाऽपि यत्सौख्यं दृग्भ्यामवाप्तम् !
जागर्यया तन्मे सहसा प्रयातम् !!

यामध्यगां नित्यं प्रमिताक्षरामार्याम् !
साऽपि क्रमं धत्ते भुजगप्रयातम् !!

आजीवनं नाहं योत्स्ये तमस्काण्डम् !
प्राच्यां ममैवेदं रुचिरप्रभातम् !!

कुलिशप्रहारास्ते तादृग् गभीरा नो !
त्वत्प्रेक्षितं यादृक् हृदये निखातम् !!

रक्षेन्महाकालो दिल्लीश्वरान्नित्यम् !
यत्संस्कृतं तेषां हृदयं न जातम् !!

मन्दार्चिषैवालं पूजागृहोत्सङ्गे !
वन्दामहे दीपं तं निष्प्रवातम् !!

किं वाऽपरं चित्रं यत्पार्थिवा दूर्वा !
अत्येति माघवनं ननु पारिजातम् !!

ध्वस्तैकचक्रोऽयं लीलारथो वाण्याः !
अद्यापि नो किञ्चित् सहते विघातम् !!

संवादिनीं श्रुत्वा नूनं गलज्जलिकाम् !
के न स्मरिष्यन्ति प्रीत्याऽभिराजम् !!



## मणिकर्णिकाघट्टे !!

मणिकर्णिकाघट्टे दिष्ट्या स्थितोऽहम् !
सत्यादृते सर्वैः स्निग्धैश्च्युतोऽहम् !!
स्वप्ने मया किञ्चिद् दातुं प्रतिज्ञातम्
आजीवनं तस्मात् प्रेतैर्वृतोऽहम् !!

धाराधराः कामं वर्षन्तु वीथीषु
जातो मरौ शाखी शाखोटकोऽहम् !!
मथ्नन्तु काव्याब्धिं मां मन्दरीकृत्य
यत्काश्यपे पृष्ठे सम्यक् स्थितोऽहम् !!

काव्यप्रकाशत्वं कस्मान्न मे वन्द्यम् ?
हृद्ये दशोल्लासे सप्तान्वितोऽहम् !!
नो साहसाङ्कानां गोष्ठ्या बहिष्कार्यः
कामं कुविन्दोऽस्मि काव्ये रतोऽहम् !!

अस्मिन् पुरे यावद् गायामि गीतानि
जाने यथा धाराधीशैः श्रुतोऽहम् !!
मा संस्कृते ! खेदं चिन्तां व्यथां कार्षीः
पुन्नोऽभिराजस्ते लोके धृतोऽहम् !!



## हरते मनोऽभिराजः !!

किञ्चिद् गृहे व्यतीतं किञ्चित्तले द्रुमाणाम् !
न कदम्बके नराणां न कदम्बके सुराणाम् !!

अधिबालुकं जलानां भ्रान्तिं सदा वितेने
तस्यै मरीचिकायै सततं नमो मृगाणाम् !!

गोष्ठ्यां सुराविरोधो गेहे यथेच्छपानम्
लोकद्वयं कराग्रे प्रतिभाति सोमपानाम् !!

ये लम्पटास्त एते शिविकां वहन्ति मार्गे
प्रभुरेव हन्त ! रक्षेत् पातिव्रतं वधूनाम् !!

तिष्ठन्तु तावदश्वास्तेषां प्रवलानैः किम् ?
लोकोऽधुनेह पश्येल्लघुधावनं खराणाम् !!

विघ्नेश्वरस्तनूजो भार्या गृहेऽन्नपूर्णा
भैक्ष्यं तथापि भाले लिखितं महेश्वराणाम् !!

दृष्ट्वा तवानुरागं किं किं मया स्मृतं नो ?
शृङ्गोच्चयं शशानां कुसुमम् उदुम्बराणाम् !!

सत्यपि दुरन्तवैरे जाताः कथं सहायाः ?
जनसम्मताः पिकास्ते श्येनार्तमौकुलीनाम् !!

मध्येसभं हरन्त्या मृगलोचने ! मनो मे
अधरीकृता कलाऽसौ ननु पश्यतोहराणाम् !!

विपिनेषु दावदाहः सलिलेषु कालकूटम्
व्याधाश्च हन्तुकामाः कुशलं क्व शम्बराणाम् !!

वृक्षे निशाविहारः सलिले च मत्स्यलाभः
उभयत्र सौख्यमात्रं संलक्ष्यते बकानाम् !!

ते नासिकाविहीना एते च कर्णहीनाः
भुञ्जन्तु केऽपि राष्ट्रं न सुखं मनाक् प्रजानाम् !!

ये शतमुखैरकर्षन् बोफोर्सकाण्डचर्चाम्
विवरे क्व ते विलीनाः किमभूत्तदाननानाम् !!

यदि नाम सांसदानां हरते मनोऽभिराजः
प्रोद्घाटिते मुखे किं भविता सुधाघटानाम् !!





# अभिराज-साहित्य (प्रकाशित)

| ● रचना (संस्कृत) | प्रकाशनवर्ष | मूल्य |
|---|---|---|
| १. नाट्यपञ्चगव्यम् (एकांकि-संग्रहः)<br>उ०प्र० शासन द्वारा पुरस्कृत | १९७१ | १५/- |
| २. अकिञ्चनकाञ्चनम् (एकांकि)<br>उ०प्र० शासन द्वारा पुरस्कृत | १९७४ | १५/- |
| ३. आर्यान्योक्तिशतकम् (खण्डकाव्यम्)<br>उ०प्र० शासन द्वारा पुरस्कृत | १९७५ | १५/- |
| ४. नवाष्टकमालिका (खण्डकाव्यम्)<br>उ०प्र० शासन द्वारा पुरस्कृत | १९७६ | १५/- |
| ५. नाट्यपञ्चामृतम् (एकांकि-संग्रहः) | १९७७ | २०/- |
| ६. वाग्वधूटी (गीत-संग्रहः)<br>उ०प्र० शासन द्वारा पुरस्कृत | १९७८ | २२/- |
| ७. पराम्बाशतकम् (खण्डकाव्यम्) | १९८१ | १०/- |
| ८. चतुष्पथीयम् (एकांकि-संग्रहः)<br>उ०प्र० शासन द्वारा पुरस्कृत | १९८१ | १५/- |
| ९. प्रमद्वरा (चतुरंकिका नाटिका)<br>उ०प्र० शासन द्वारा पुरस्कृत | १९८४ | २०/- |
| ११. मृद्वीका (नवगीत-संग्रहः) | १९८५ | १५/- |
| ११. इक्षुगन्धा (कथा-संग्रहः)<br>साहित्य अकादमी द्वारा पुरस्कृत | १९८६ | १५/- |
| १२. रूपरुद्रीयम् (एकांकि-संग्रहः) | १९८६ | २५/- |
| १३. शताब्दीकाव्यम् (खण्डकाव्यम्) | १९८७ | १५/- |
| १४. अभिराजसप्तशती (कोशकाव्यम्)<br>उ०प्र० शासन द्वारा पुरस्कृत | १९८७ | २५/- |
| १५. जानकीजीवनम् (महाकाव्यम्) | १९८८ | १५०/- |
| १६. श्रुतिम्भरा (नवगीत-संग्रहः) | १९८९ | २०/- |
| १७. वामनावतरणम् (महाकाव्यम्) | यंत्रस्थम् | १००/- |
| १८. रूपविंशतिका (एकांकि-संग्रहः) | यंत्रस्था | ५०/- |

● **अप्रकाशित कृतियाँ**

१. चौरशतकम् (खण्डकाव्यम्)

२. अभिनवपञ्चतन्त्रम् (कथासंग्रहः)
पारिजातम् (कानपुर) में धारावाही प्रकाशित।

३. मृगाङ्कदूतम् (खण्डकाव्यम्)
संस्कृतप्रतिभा (नई दिल्ली) में प्रकाशित।

४. बालीविलासम् (खण्डकाव्यम्)
संस्कृतप्रतिभा (नई दिल्ली) में प्रकाशित।

५. विमानयात्राशतकम् (खण्डकाव्यम्)

६. देववाणीहुङ्कारशतकम् (खण्डकाव्यम्)

७. यवसाहित्यशतकम् (खण्डकाव्यम्)

८. बालीप्रत्यभिज्ञानशतकम् (खण्डकाव्यम्)
अर्वाचीनसंस्कृतम् (नई दिल्ली) में चारों प्रकाशित।

९. सुरभारतीदण्डकम् (खण्डकाव्यम्)
दूर्वा (भोपाल) में प्रकाशित।

१०. राङ्गडा (कथासंग्रहः)

११. बालीद्वीपे भारतीया संस्कृतिः (गवेषणाग्रन्थः)
संस्कृतश्रीः (श्रीरंगम) में धारावाही प्रकाशित।

१२. कस्मै देवाय हविषा विधेम (प्रशस्तिसंग्रहः)
विभिन्न पत्र-पत्रिकाओं में प्रकाशित।

१३. छन्दोऽभिराजीयम् (अभिनवच्छन्दश्शास्त्रम्)

१४. अभिराजशतकम् (खण्डकाव्यम्)

१५. काव्यतरङ्गिणी (संस्कृतसाहित्येतिहासः) २१ अध्यायों में संस्कृतवाङ्मय का पद्यबद्ध विवरण।

● **प्रकाशित हिन्दी कृतियाँ**

१. वेंदना (खण्डकाव्य)

२. पनघट (खण्डकाव्य)

३. मुक्तिदूत (खण्डकाव्य, महात्मा गाँधी पर आधारित)
हाईस्कूल कक्षा के पाठ्यक्रम में निर्धारित (उ०प्र०)

४. पूर्णकाम (खण्डकाव्य, भरत पर आधारित)

५. गृहत्याग (खण्डकाव्य, बुद्ध पर आधारित)

६. अस्थिकलश (खण्डकाव्य, इन्दिरा पर आधारित)

७. मुक्तधारा (काव्यसंकलन)

८. दो पात नींबू : तीन पात अमोला (६० कविताएँ)

९. सपनों में डूब गया मन ! (५५ कविताएँ)

१०. पलकों के बन्द द्वार ! (६५ कविताएँ)

११. बच्चों के पाहुन (शिशुकाव्य)

१२. पढ़ो और बनो (शिशुकथाएँ)

१३. वन के गीत : मन के मीत (शिशुकाव्य)

१४. नया विहान (शिशु एकांकी)
१५. तितली के पंख (शिशुकाव्य)
१६. महाभारत की किशोरकथाएँ
१७. रक्ताभिषेक (शिशु एकांकी)
रामकुमार वर्मा बाल नाट्यपुरस्कार—८८ ई०
१८. विधवा (आञ्चलिक उपन्यास)

● शोध एवं पाठ्यग्रंथ




१६. मणिकाञ्चन (१८ शोधनिबन्धों का संग्रह)
२०. संस्कृत साहित्य में अन्योक्ति (शोधप्रबन्ध)
हिन्दी साहित्य सम्मेलन प्रयाग द्वारा प्रकाशित।
२१. किरातार्जुनीयम् (प्रथमसर्गः)
२२. छन्दोऽलङ्कारसौरभम्
२३. रसनिरूपणम्
२४. कादम्बरीकथामुखम्

● भोजपुरी रचनाएँ

२५. फगुनी बयार (गीतसंग्रह)
२६. बदरा भइल मोरा दूत !
मेघदूत का भोजपुरी रूपान्तर, मुद्रणाधीन।

● अप्रकाशित हिन्दी/भोजपुरी कृतियाँ

१. गन्धमादन (राष्ट्रीय काव्यसंग्रह)
२. तटस्था (वैचारिक मुक्तछन्द कविताएं)
३. सुपर्ण (खण्डकाव्य, पक्षिराज गरुड़ पर आधारित)
४. पाषाणी (खण्डकाव्य, अहल्या पर आधारित)
५. सुवर्णद्वीपं (खण्डकाव्य, बालीद्वीप पर आधारित)
६. त्रिणाचिकेत (काव्यरूपक)
७. दुर्योधनवध (मञ्चीय नाटक, पाँच अंक)
८. अदृश्यन्ती (पौराणिक नाटक, तीन अंक)
९. रोदसी (महाकाव्य, १५ सर्ग)
१०. बिरहा की रैन (भोजपुरी खण्डकाव्य)
११. सकुन्तला (भोजपुरी महाकाव्य, ९ सर्ग)

●

महाकवि योगीश्वर–प्रणीत

# रामायणककविन्

यवद्वीप (जावा) के मतरामवंशी महाप्रतापी नरेश बलितुंग के शासनकाल (नवीं शती ई० का उत्तरार्ध) में उनके राजकवि योगीश्वर ने 'कवि' भाषा (Old Javanese) में 'रामायणककविन्' का प्रणयन किया। वाल्मीकिरामायण, भट्टि एवं रघुवंश से प्रभावित इस महान् कालजयी कृति में २६ सर्ग तथा २७७८ श्लोक हैं। अभिराज डा० राजेन्द्रमिश्र ने, अपने वालीद्वीप के प्रवास में प्रथम बार इस श्रेष्ठ रामकथा का देवनागरी लिप्यन्तरण तथा हिन्दी रूपान्तर सम्पन्न किया है। सुवर्णद्वीपीय साहित्य का यह शिखर-ग्रन्थ अपनी रचना के एक सहस्र वर्ष बाद शीघ्र ही भारतीय पाठकों को प्राप्त हो सकेगा। उत्तरप्रदेश शासन के सांस्कृतिक कार्य-विभाग द्वारा प्रकाश्यमाण !

# Sejarah Kesusastraan Sanskerta

Abhiraj Dr. Rajendra Mishra, Visiting Professor in Sanskrit and Indian Cultural History, Udayana University Denpasar, Bali-Indonesia (May 87–April 89) wrote the above mentioned History of Sanskrit Literature, in Bahasa Indonesia specially for the Balinese Sanskrit readers, The book is divided in nine chapters (bob) the last one of which deals with the inter–relation between Sans and Old Javanese literatures. Published from Denpasar city in 1988, having 120 pages and a fascinating getup, price 2000 rupiyah (about 18 rupees in Indian currency) the book can be had by the Indian readers also through the Vaijayant Publicatins, Allahabad.



# श्रुतिम्भरा

अभिराज डॉ० राजेन्द्र मिश्र का अर्वाचीन संस्कृत कविता को प्रदत्त योगदान उल्लेखनीय है। प्रो० मिश्र ने महाकाव्य, खण्डकाव्य, नाटक, एकांकी, कथा, चम्पू, दण्डक, समीक्षा, प्रत्येक विधा में प्रातिभ लेखन किया है।यह लेखन जितना विविधतापूर्ण है उतना ही मौलिक भी।

परन्तु प्रो० मिश्र की लोकव्यापी कीर्ति का प्रमुख हेतु है उनका नवगीत-वाङ्मय! आचार्य जानकीवल्लभ शास्त्री, पं. प्रभात शास्त्री तथा श्री रामनाथ प्रणयी की मधुर-मसृण, लयवाही गीत परम्परा को शिखरारूढ़ किया प्रो० मिश्र ने। मिश्र जी के गीतों का सबसे बड़ा वैशिष्ट्य है उनका श्रवण-माधुर्य। प्रकृति,प्रेम, राष्ट्र एवं मानवीय संवेदनाओं से जुड़े इन गीतों की कोमल-कान्त पदावली तथा सारल्य प्रस्तुति के साथ ही श्रोता के हृदय में उतर जाता है। संस्कृत में लिखे ये गीत जहाँ व्याकरण दृष्ट्या पूर्णतः शुद्ध है वहीं पदबन्ध की मिठास एवं भाषा की सरलता के कारण हिन्दी गीतों जैसे आत्मीय प्रतीत होते हैं।

प्रो० मिश्र ने उत्तर-प्रदेश के पूर्वांचलीय लोकगीतों को भी संस्कृत पदशय्या में जैसा का तैसा अवतारित किया है। उनके नवनीत संग्रहों - वाग्वधूटी एवं मृद्वीका में संकलित सूतगृहगीतम् (सोहर) प्रचारगीतम् (पचरा) कजरी, गलज्जलिका (गजल) चैत्रकम् (चैता) रसिकम् (रसिया) लांगलिकम् (लाँगुरिया) तथा फाल्गुनिकम् (फाग) इसके जीवन्त प्रमाण हैं।

प्रो० राजेन्द्र मिश्र ने अब तक प्रायः तीन सौ नवगीतों की सर्जना की है। प्रस्तुत नवगीत - संग्रह श्रुतिम्भरा के अधिकांश गीत कवि द्वारा बालीद्वीपीय प्रवास (अप्रैल १९८७-मार्च १९८९) में प्रणीत किये गये हैं। फलतः इन गीतों का स्वाद ही कुछ और है।

